# संस्कृत-प्रतिभा

5.2

(षाण्मासिकी पत्रिका)

त्रयोविंश उन्मेषः   द्वितीयविलासः

सम्पादकः

आचार्यः एस्. बि. रघुनाथाचार्यः



# संस्कृत-प्रतिभा

(षाण्मासिकी पत्रिका)

त्रयोविंश उन्मेषः
द्वितीयविलासः

सम्पादकः
आचार्यः एस्. बि. रघुनाथाचार्यः

उपसम्पादकः
आचार्यः सि. वि. शेषाचार्यः



साहित्य अकादेमी

Saṃskṛta-Pratibhā
(Half-Yearly Journal)
Volume XXIII, No. 2
Oct-March 2000-2001

Editor
S.B. Raghunathacharya

Sub-Editor
C.V. Seshacharya

*Send your literary contribution, subscription and advertisements to the Secretary, Sahitya Akademi*

Annual Subscription Rs. 30
Single copy Rs. 15
Foreign : 10$ by Airmail per issue

Published by
K. Satchidanandan
Secretary, Sahitya Akademi, Rabindra Bhavan
35, Ferozeshah Road, New Delhi 110 001

Laser typeset and Printed at Vikas Computer & Printers,
Naveen Shahdara, Delhi 110032

# सम्पादकीयम्

मोदः प्रमोद आनन्दः यदद्य साहित्य अकादम्या प्रचाल्यमानायाः षाण्मासिक्याः संस्कृतप्रतिभायाः त्रयोविंशोन्मेषस्य द्वितीयं विलासं सरससाहितीहृदयानां सहृदयानां करकमलयोः समर्पयितुमवकाशस्संवृत्त इति। संस्कृतप्रतिभेयं सरसाभिः कविताभिः हृद्यैः गद्यबन्धैः, अद्वितीयेन कथाद्वयेन, अप्रतिमगानेन यक्षगानेन, वीरकथाविस्तरेण परिचयेन, विद्वन्मनोरञ्जनचणैः विमर्शैः, तत्त्वार्थवीक्षाभिः ग्रन्थसमीक्षाभिश्च राराज्यमाना सचेतसां चेत आवर्जयितुमीष्ट इति नापरोक्षं प्रेक्षावताम्।

राष्ट्रियप्रतिभायाः प्रमाणभूतेयं संस्कृतप्रतिभा नवनवोन्मेषैः चित्रविचित्र-भावनाविशेषैः, अनल्पकल्पना-विभासुरैः प्रबन्धसन्दर्भैः समिन्ध इति मोमुदीति नश्चेतः।

मन्यामहे वयमित्थं सर्वालङ्कारभूषितेयं प्रतिभा अन्वर्था परिस्फुरन्ती सहृदयानामानन्दाय कल्पत इति।

*साहितीरसनिष्यन्ति गद्यपद्यविमर्शनैः।*
*संस्कृतप्रतिभा सेयं समिन्धां सज्जनाहता॥*

एस्. बि. रघुनाथाचार्यः
प्रधानसम्पादकः

# विषयानुक्रमणिका

पृष्ठांक

*कविता—*

# न चेद्वाल्मीकिरभविष्यत्

## एस्. टि. जि. वरदाचार्यः

कुर्वाणमेकं सरसं च काव्यं स्रष्टारमाहुर्विबुधाः कवीन्द्रम्।
अनन्तरूपं च विचित्रमेतत् जगत्सृजन्तं क इतीड्महे त्वाम् ॥1 ॥

सन्त्रातुमिष्टिं पितरं स्वबाल्ये पितुर्वचः पालयितुं प्रजाश्च।
प्रजास्समाराधयितुं च दारान् तत्याज यस्तं प्रणमामि भूपम् ॥2 ॥

विमर्शः कविता चेति द्वन्द्वं यदि सुसङ्गतम्।
प्रसुवीतरसं हृद्यं सम्मोदाय सचेतसाम् ॥3 ॥

सविमर्शात्कवेर्नान्यः कवितावान्विमर्शकः।
कविमेतादृशं स्तोतुं क्षम ईदृग्विमर्शकः ॥4 ॥

यस्यैतद्द्वितयं नास्ति कविता च विमर्शनम्।
सोऽहमीशेऽधमः स्मर्तुं कथं तं प्रथमं कविम् ॥5 ॥

दोषोऽनर्हनियोगोत्थो नियोक्तुर्न भवेद्यदि।
कीर्तिकामाः विदुः कृत्यं न कथञ्चन मे क्षतिः ॥6 ॥

अन्वयव्यतिरेकाभ्यां सम्बन्धस्य विनिश्चये।
वाल्मीकेस्तस्य कार्यस्य यत्नोऽयं मे यथामति ॥7 ॥

यस्य सत्त्वेऽस्तिता यस्य तदभावे न तत्स्थितिः।
अन्वयव्यतिरेकस्य मूलं प्राहुर्विपश्चितः ॥8 ॥

उक्तान्वयं तयोः पूर्वं वाल्मीकिस्तोत्रकैतवात्।
व्यतिरेकं ततो वक्ष्ये प्रतिज्ञातं यथात्मना ॥9 ॥

ओंकार इव वेदानां मानवानां मनुर्यथा।
कवीनां प्रथमोऽसि त्वं कालतो गुणतोऽपि च ॥10 ॥

शोकात्तव कथं श्लोकः सम्भूत इति शङ्कितम्।
मानिषादेन पद्येन पङ्क्ताज्जातेन शाम्यतु ॥11 ॥

भारतं पञ्चमं वेदं काव्यं तव कृतिं विदुः।
प्रभुमित्रोपमादाद्यात्कान्तातुल्यं परं परम् ॥12॥

उपदेशवशात् कृष्णः पण्डितैरेव गृह्यते।
अनुष्ठानात्तु रामस्ते पामरैरपि सेव्यते ॥13॥

आदर्शो दर्शयेद्बिम्बं पुरतःस्थितवस्तुनः।
तव काव्ये तु सम्प्रेक्ष्यं नाममात्रावशेष्यपि ॥14॥

विच्छायतामुपैत्येव चित्रं कालव्यतिक्रमे।
विच्छित्तिस्तव काव्यस्य वृद्धिमेवाश्नुते पुनः ॥15॥

सृष्टिर्धातुः चिराज्जीर्णा प्रलयं चापि गच्छति।
तव सृष्टेर्जरा नास्ति प्रलयस्य तु का कथा ॥16॥

शोकक्रोधौ जुगुप्सां च भयं चोत्पादयन्ति ये।
तान् जिहासति सर्वोऽपि जन्तुः सर्गे प्रजापतेः ॥17॥

तव सृष्टौ तु ते सर्वे ह्लादमात्रावसायिनः।
साकांक्षमुपसेव्यन्ते सिद्धाश्रम इव स्थिताः ॥18॥

कादाचित्कौ विधेः सृष्टौ यावास्तां रामरावणौ।
सदातनौ विधत्से तावहो ते प्राभवं महत् ॥19॥

केषाञ्चिद्रावणः शत्रुः त्राता राम इति स्थिते।
कथमेतौ हि सर्वेषां तादृशौ विहितौ त्वया ॥20॥

रामात्किं भवतः कीर्तिः त्वत्तो वास्येति संशये।
विनिर्णये क्षमः कुर्वे पक्षद्वयपरिग्रहम् ॥21॥

अथवा

रामो विश्वस्थितौ हेतुः त्वदधीना च तत्स्थितिः।
स्थाने गुरुं गरीयांसं प्राहुर्देवान्मनीषिणः ॥22॥

ससैन्योऽस्त्रैः जघानैकं रामः संयति रावणम्।
वाचैकस्त्वंताननन्तान् अहन् हंसि हनिष्यसि ॥23॥

अरण्यानीमरण्यौकाः आश्रमं चाश्रमे स्थितः।
विद्वान्सन् विदुषां गोष्ठीं धर्मं धर्मस्य मर्मवित् ॥24॥

यथावद्वर्णयंस्त्वं मे नाभिनन्द्यो विशेषतः।
असंस्तुतोक्तौ तज्ज्ञानां ह्रेपणी तव चातुरी ॥25॥

समृद्धा राजधान्यश्च प्रासादाश्च महीभुजाम्।
क्षत्राणां बीरवादाश्च खलानां दुष्टवृत्तयः ॥26॥

तव तूलिकया वाचा चित्रिताश्चित्रयन्ति नः ॥27॥

बालानां सुगमोऽसि त्वं वृद्धानां तु सुदुर्ग्रहः।
कस्ते तुलां समारोहेत् त्वद्वर्ण्यान्नायकात्परः ॥28॥

न भीषयसि किञ्चिज्ज्ञं न विज्ञैः परिभूयसे।
यथाधिकारमात्मानं विवृणोष्युपसर्पते ॥29॥

रसानामनुभूतौ ते तापसस्य शमः कथम्?
तदभावे कथं वा ते कवीनां वंशकर्तृता? ॥30॥

संसाराब्धिपरिभ्रान्तावष्टदिग्वायुमी रसैः।
स्वस्थानावस्थितिः शान्तिः पोतस्यास्ति शरीरिणः ॥31॥

चक्रस्यारा यथा नाभेः शमादन्ये रसास्तथा।
अष्टोद्भूताः पुनस्तस्य स्थितावायान्ति हेतुताम् ॥32॥

साम्यावस्था शमोऽव्यक्तं रसास्तत्परिणामजाः।
परिपोषं यदा यान्ति यान्ति तद्रूपतां तदा ॥33॥

सन्निधिस्तव चेदस्ति किमन्यकविभिर्मम।
सन्निधिस्तव चेन्नास्ति किमन्यकविभिर्मम ॥34॥

साम्राज्यं रोचते किं ते वाल्मीकिर्वेति भाषितः।
नूनं त्वामेव दोषज्ञो वृणुते गुणवत्तरम् ॥35॥

वैकुण्ठात्त्वां कविं विष्णुः आनिनाय सहात्मना।
प्रणेतुं चरितं स्वीयं कल्याणायापि भाविने ॥36॥

नो चेत्किं त्वत्समो नासीदद्यापि किमुताधिकः ॥37॥

यत्ते वर्षसहस्रेभ्यः कविताक्षेत्रकर्षकाः।
अदीधरन्नृणात्तस्मात्सामात्यः पातु तान्नृपः ॥38॥

कोऽलं भवेदलं वक्तुं गुणान्वाचामगोचरान्।
तव रामस्य नेतुश्च शेषपूर्त्यै ममाञ्जलिः ॥39॥

नावतर्स्यद्यदि वाल्मीकिः नाभविष्यस्ततो ध्रुवम्।
कवयः कविकर्माणि प्रमोदाँश्च सचेतसाम् ॥40॥

रामो विष्णोर्विवर्तोऽपि तद्भक्त्या च तितीर्षवः।
महोत्सवोऽयं तन्मूलः मत्कवित्वप्रदर्शनम् ॥41॥

अभविष्यत्तमो विष्वग्रावणश्च गृहे गृहे ॥42॥

न सौष्ठवं यत्र न चार्थसंपत् न मे प्रलापः सुधियो धिनोति।
ध्रुवं तु वाल्मीकिविमोहितानां सधर्मणां मे हरते मनांसि ॥43॥

आसंसारं सहायं प्रदिशति भुवि यं स्वस्य विष्णुः कविं तं
तेनाद्वैतं गतां तां कृतिमतिमधुरां तत्र वार्णी च दैवीम्।
तत्सेवानन्दमग्ना श्रममपि परिषद्या न जानाति तां वः
तत्सभ्यान्नश्च रामः प्रविमलचरितः सानुजोऽव्यात्सदारः ॥44॥

---

# विधेर्होमो निषेधानले

## रेवाप्रसादद्विवेदी

अद्यास्ते कलुषीकृतं बत मुखं पुंसां स्वकीयं स्वयं
सृष्ट्वा हास्य करैः स्वकैर्निजमुखे कालाञ्जनानां ततिः।
यन्मानुष्यकमीयुषा वपुरिदं प्रध्वंस एवाश्रितः
स्वं ध्वंसं प्रतिपद्य सार्धममुना संघेन पुंसा हहा ॥1॥

यद्वै भूस्तन[1] वायुयानतलतः पुंभिः परीतोदरं
हत्वा किञ्चन वायुयानयुगलं नीतं नवार्क[2] पुरम्।
तत्राप्युच्चतमे गृहद्वय इदं संघटथ वह्नेर्महा-
भोगे वर्ष्मणि पातिताश्च मनुजास्तत्रैव कार्ये रताः ॥2॥

यद्वै मानवहातनो[3] पनगरे पुंजाति कीर्तिध्वज-
प्रख्यातं व्यवसायकेन्द्रभवनद्वन्द्वकृतं भस्मसात्।
अस्यार्थः खलु कः, स एष सुमहान् निर्माणकाये विना-
शस्याघात उतास्ति कश्चन विधेर्होमो निषेधानले ॥3॥

यो वै भूमितले व्यधायि सुमहान् गर्तः शतैः सागरै-
स्तन्नाम्ना प्रथितश्च यः खलु जलैः क्षारैः समाप्लावितः।
तस्याधारमहीं निखाय विवराकाशात् ततो धावितु
याने (कारे) भ्यो विदधेऽत्र येन सरणिस्तस्मै त्वसौ[4] निर्ऋतिः ॥4॥

मृत्युं मारयतेऽत्र कः, न खलु यः यस्तस्माद् विभेत्येषकः,
तस्मै स्वं खलु यः प्रयच्छति भयं त्यक्त्वा स वै तन्मृतिः।
मृत्युं मारयते तु यः शिव इति ख्यातः परेषां कृते
स ह्येवात्ति हलाहलं च जगतीं त्रातुं स एव प्रभुः ॥5॥

---

1. Bostan
2. New york city
3. Manhattan, New york
4. असौ = घातः

रे रे मानुषपञ्जरेऽद्य कृतवांस्त्वं स्वं निवासं यदि
त्वं त्वय्येव निवासमेषि परम्, आस्त्वं नासि तत्त्वं परम्।
यत्तत्त्वं परमायते भवति तन्मङ्गल्यमेव प्रियं
सौन्दर्येण पटिप्लुतं भवसि किं मृत्यो! त्वमेतादृशः ॥6॥

येनेन्दीवरकाननेऽस्ति दहनैरङ्गारकैर्वर्षितं
सस्याङ्कूरनिरन्तरेषु च दृढं क्षेत्रेषु दुद्रूषितम्।
तेनैवाद्य हहार्धलक्षगणनातीतैर्नरैः पूरितं।
सद्यद्वन्द्वमिदं करालहृदयेनेत्थं प्रचूर्णीकृतम् ॥7॥

तादृश्येव पुनश्च काममुपदीचर्कर्तु वेश्मान्यथो
तादृश्यो हि च तत्र सौलभजुषोऽप्यऽऽदधीरन् श्रियः।
किन्त्वेषोद्य कथं नु पूर्तिमयिता गर्त्तो नृणां निर्ममै-
र्होमैर्यस्तु कृतः कृतान्तपरुषै रक्षोऽग्रजातैर्नरैः ॥8॥

पित्रोर्येन वियोजिता शिशुसती दुग्धानना, वल्लभा-
साहस्रीव कषायिता प्रणयिनां प्रीत्या क्षणार्धेन वै।
तेनाश्रूणि समुद्रपूरण-लसद्वेगानि मुञ्चत्स्वहो
नृणामेव कुलेषु धिक् किमधुना नो दृक्तटी धीयते ॥9॥

नृत्यन्त्यद्य न भूस्तनाऽभ्रकुहरे किं वायुयानान्यहो
घोषैर्यानि दिशां गणे प्रजनयन्त्याकम्पनां भीषया।
तन्निर्माणधुरं सियाटलमही कामं दधात्यञ्जसा
तद् विध्वंसविरामधूस्तु हहहा धिक् कान्दिशीकायते ॥10॥

भ्राष्ट्राणामयुतं यदा नरमहीकुक्षौ प्रदग्धायते
किं मूल्यं तु तदान्धसामपि शती जागर्ति चेन्मानुषे।
न्यक्कारैरियमद्य मानवमही सांवर्त्तकैराचिता
ज्वालावर्षिभिरम्बुदैरिव रटत्कारोल्बणैः सर्वशः ॥11॥

येनानाशि सहस्रयुग्मशरदः प्रत्नाकृतिर्मारवे
स्वैरेवाग्रजबन्धुभिर्विरचिता बुद्धस्य गन्धारगा।
तेनैवाद्य विनाशिताऽत्र धिगहो पुंसां विसंख्या तति-
र्नान्येनेदृश-तप्तलौहहृदयः को वा परः स्याद् भुवि ॥12॥

किं दुर्योधन एव संप्रति पुनः प्रादुर्बभूवात्मनः
सर्वो येन यमानने कुमतिना बन्धुव्रजो वेशितः।

यद् वैषोऽस्ति महांस्ततोऽपि न स मुखं मृत्योः करालं पुराऽ
पूर्वं वीक्षितवान्, असौ तु तदिदं पश्यंस्तदेवाऽविशत् ॥13 ॥

या वै मृत्युमुखे बभूव सुदृढा दंष्ट्रावली साऽप्यसौ
नूनं साहसिकेन तेन शिशो घातेन वित्रोटिता।
तस्मादेव तु हन्त हन्त सहसा सार्धं सहस्रं जनाः
संवेशाय सुखाय लब्धुमशकंस्तत्रावकाशं क्षणात् ॥14 ॥

धर्मं रक्षितुमुद्यता वयमिदं सर्वं प्रकुर्मस्ततो
नो पापस्य कणोऽपि नः स्पृशति वै सर्वे वयं धार्मिकाः।
श्रद्धैषाऽपि न वः प्रसिद्ध्यति न वै व्याघ्री गवां निश्छलां
वृत्तिं पालयितुं कृशाङ्गलतिकानामप्यहो निश्छला ॥15 ॥

हस्ते यो लगुडं बिभर्ति ,सुदृढैरामुष्टिकैः साहसी
स ह्येवावनिमण्डलश्रियमपि प्रोन्मथ्य भुङ्क्ते कृती।
एषा यस्य मतिस्ततो नृशुनकात् संबिभ्यदप्यास्रयो-
ज्ञासैकव्रतिनां वरः प्रभुरसौ जागर्ति तस्मै न (नो) किम् ॥16 ॥

---

# क्रियासिद्धिः सत्त्वे भवति

मुडुम्बै नरसिंहाचार्यः

श्रीरामकृष्णपदनीरजदत्तचित्तं
सङ्कल्पसिद्धिविभवं करुणासमुद्रम्।
श्रीमन्नरेन्द्रमकुटीतटचुम्बिताङ्घ्रिम्
श्रीमन्नरेन्द्रयतिराजमहं नमामि ॥1॥

यदीया मूर्तिश्रीः प्रकटयति शान्तिं निरुपमां
यदीया वाग्धारा परिभवति नैलिम्पतटिनीम्।
यदीया सद्दीक्षा सकलनिगमावेक्षणरता
विवेकानन्दः स स्फुरतु हृदयाब्जे मम सदा ॥2॥

अनेके सञ्जाता जगति मुनयः संयमधुनाः
अनेके चाप्यासन् भुवि निगमशास्त्रस्थितिचणाः।
न जानीमो नूनं किमिति पुनराचूडचरणं
विवेकानन्दाख्याश्रवणमनु रोमाञ्चति वपुः ॥3॥

अतिक्रान्तः सीमां स्वयमुपनिषत्तत्त्वजलधेः
अतिक्रान्तः सीमामपि भरतभूमेः कृतमतिः।
क्वचिद् गर्जन् स्फूर्जन् क्वचिदपि तटिच्छ्रीं प्रतिदिशन्
अवर्षीद् वेदान्तामृतमिह नरेन्द्राख्यजलदः ॥4॥

"किमेवं लोकेऽस्मिन् भवति यतिराट् सुन्दरयुवा?
किमेवं चाङ्गलेय्यां भणति मधुरं हैन्दवपुमान्?
क एवं वेदान्तान् विशदयति हस्तामलकवत्?"
नरेन्द्रश्रोतॄणामिति बहुलमाश्चर्यमभवत् ॥5॥

सभाः पाश्चात्यानां सुनिशितकटाक्षैः प्रचलिताः
मनोज्ञा चाङ्गलेयी मृदुलपदबद्धा विरचिता।
प्रतिष्ठामानीतं पुनरपि च काषायवसनं
जितं कन्दर्पाणां शतमपि नरेन्द्रेण वपुषा ॥6॥

"मतं मे निर्दुष्टं; तव तु बत दोषैकनिलयं
भजस्वैतत् नो चेत् पतसि नरके दुःखबहुले।"

इतीदं वैषम्यं प्रविततमतोन्मादवपुषां
नृणां येनापास्तं स हि भुवि नरेन्द्रो विजयते ॥7॥

"निरर्थाः स्पर्धाः किं भजत बहुमोहव्यतिकराः?
हरो वा विष्णुर्वा प्रभुरिति वितर्कान् त्यजत भोः।
सदेवैकं तत्त्वं भवति रुचिभेदात् बहुविधम्।"
इति श्रौतं तत्त्वं स्फुटमुपदिदेश प्रति जनान् ॥8॥

"परित्यक्त्वा क्षुद्रं हृदयगतदौर्बल्यमखिलं
समुत्तिष्ठेत्युच्चैः हरिरिव नरं घोरसमरे।"
प्रबोधैः, निद्राणान् प्रशिथिलमनस्कान् मुनिरसौ
अकार्षीत् संसिद्धान् तुमुलतरसंसारसमरे ॥9॥

"जगज्जन्मस्थेमप्रविलयमहाशक्तिवपुषः
कृपासिन्धोः दिव्यापरिमितमहावैभवजुषः।
परस्यैवांजस्य प्रविमलकलातः समुदितः
नरः पापी नैवेत्यसकृदवदच्चापि मुनिराट् ॥10॥

गुरूणां शिष्याणामपि च भुवि बन्धः सुमहितः
गुरुः साक्षाद् देवः स हि तव पिता सर्वमिति च।
प्रसिद्धं सिद्धान्तं सकलनिगमान्तप्रणिहितं
चरित्रेण स्वेनाप्रकटयदिहायं मुनिवरः ॥11॥

मनो मूर्खाणामप्यतिमधुरवेदान्तसुधया
धियो युक्तिप्रौढैरुचितवचनैश्चापि विदुषाम्।
प्रवृत्तिं दुष्टानां पटुतरकशाभीषणपदैः
निनाय प्रस्थानं शुभमिह नरेन्द्रो यतिवरः ॥12॥

किमेष प्राग्जन्मप्रविततमहापुण्यमहिमा!
किमेतत् दिव्यानामुपचितफलं पूर्वतपसाम्!
यदुक्तं तत्सर्वं वचनमिव वेदस्य विदधे
'वसिष्ठस्यांशोऽसौ' इति गुरुवचः सत्यमभवत् ॥13॥

गुरोराशीर्वादं स्वहृदयगतं धैर्यमतुलं
समालम्ब्य स्वामी भुवनहितमाधाय सुमहत्।
नवत्रिंशदवर्षैः परिमितवयाः ब्रह्मसमगात्
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥14॥

---

# मशकदशकम्

एच्. वि. नागराजराव

मज्जति सिन्धौ मनुजो मीनवदुत्पतति खे च पक्षीव।
किन्तु न वेत्ति कथञ्चिन् मशकीदंशेभ्य आत्मनो रक्षाम् ॥1॥

मशकानामपि जानौ स्त्रिय एवं दशन्ति न पुमांसः।
इति कथयति विज्ञानी वयमत्र न विद्म एवं तद्भेदम् ॥2॥

ननु मशकि जनानां देहमाविध्य चञ्च्वा क्षतजमकरुणा त्वं चूषसीति स्थितं तत्।
पुनरवि कुरुषे किं कर्कशं गानमेतद् रिपुरिव लवणापः प्रक्षिपन् हा व्रणेषु ॥3॥

मशक सकललोके पीडकानां समूहे प्रथमगणनयोग्यो नास्ति मत्तोऽत्यजन्तुः।
इति यदि वहसि त्वं गर्वमज्ञा, यदास्ते मृनकुलमपि हिंसन् वार्धुषिर्नाम मर्त्यः ॥4॥

शिशुमपि पशुमपि शशमपि कृशमपि सम्पीड्य पिबसि रक्तं त्वम्।
किं वा साधयसीत्थं दिन दशकं भवति ते ह्यायुः ॥5॥

नृपालको वा पशुपालको वा महान् धनी वास्तु मितम्पचो वा।
सर्वस्य रक्तं सममेव चूष—न्त्यपक्षपाता मशकि त्वमेव ॥6॥

न जातिभेदो न च वर्ग भेदो न रूपभेदो न च वर्णभेदः।
द्वयं समानं सकलस्य राष्ट्रे मताधिकारो मशकाभिदंशः ॥7॥

व्याघ्रान् सिंहांस्तदुपरि वृकान् चित्रकान् वा तरक्षून् हिंस्रान्
धाता सृजति सुबहून् तं क्षमेऽहं कथञ्चित्।
नित्यं निद्रां विघटयति या दुष्टगानैश्च दंशैः तां
योऽस्राक्षीन्मशकवनितां, न क्षमे तं कदापि ॥8॥

अमृतं सुलभं भवत्वथो सुलभाः सन्तु तिलोत्तमादयः।
मशकास्त्रिदिवे भवन्ति चेद् वसतिर्मास्तु कदापि तत्र मे ॥9॥

लवणासुरमहिषासुर-नरकासुरतारकासुरान् देवाः।
जघ्नुः, किन्तु न शक्ताः मशकासुरसन्ततिं हन्तुम् ॥10॥

---

# मिथुनं सुसङ्गतम्

एस्. बि. रघुनाथाचार्यः

पल्लवीः

अद्यैव परिणयवेला नूनम्
अद्यैव किल नागवल्ली।
पृच्छत! सख्यः "नृत्यन्त्यस्ताः
शोभनमिति ननु गायन्तु" ॥

चरणाः

स खलु कनकाम्बरः कनककुचगिरिरियम्
सङ्गमः खलु द्वयोः सङ्गतार्थः।
वनजनाभस्सहि वनजलोचनेयम्
प्रतिसरान् बध्नीत! सख्यः! समिद्धान् ॥1 ॥

नीलवर्णो हि सः नीलकुन्तलेयम्
मिथुनं सुसङ्गतं सुन्दरमपि।
स तु शङ्खधर इयं कम्बुकण्ठी पुनः
नीराजनं सख्य आरचयत ॥2 ॥

जलधिशायी स खलु जलधिकन्येयम्
जागर्ति ननु द्वयोरौपम्यशोभा।
स खलु श्रीवेङ्कटेश्वर इयं महालक्ष्मीः
सख्य! आशीर्वदत! सम्पदमनेकशः ॥3 ॥

---

1. 'नेडे पेल्लिवेला नेडे नागवल्लीति' श्री अन्नमाचार्यसङ्कीर्तनस्य संस्कृतानुवादः

# विस्मयलहरी

## मिश्रोऽभिराजराजेन्द्रः

क्षुत्क्षामकण्ठो म्रियते विपन्नो मधुस्वरः पञ्जरबद्धकीरः।
द्राक्षां खराः सादरमास्वदन्ते दृष्ट्वेति मे विस्मयमेति चित्तम् ॥1॥

अक्षीरिणी धेनुरितीव मत्वा न भूरिभक्ष्यं प्रददाति तस्यै।
श्वानं जनो भोजयते सयत्नं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥2॥

न दीर्यते हन्त शिलाकठोरं विलोक्य भिक्षुं हृदयं यदीयम्।
स एव पुत्रीकुरुते विडालं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥3॥

मरुत्तरङ्गायितलोलवापीजलेषु भेका जनयन्ति नादम्।
मौनं भजन्ते च पिकाः पयोदे दृष्ट्वेति मे विस्मयमेति चित्तम् ॥4॥

वराहयूथोन्मथिते नु पङ्के भान्ति स्वयम्भूनि सरोरुहाणि।
प्रतिष्ठिता नागफणा च गेहे दृष्ट्वेति मे विस्मयमेति चित्तम् ॥5॥

या रूपलावण्यनिधानभूता सा प्रायशो हन्त दरिद्रभार्या।
ऐश्वर्यमग्नाः किल यातुधान्यो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥6॥

परार्तिसक्ताः परनिन्दनोत्काः परावमानं मधुमन्यमानाः।
न शीर्षपीडां दधते कदाचिद् दृष्ट्वेति मे विस्मयमेति चित्तम् ॥7॥

वाराङ्गनाश्चाऽप्यधरीक्रियन्ते याभिः कदाचारसरिद्गुहाभिः।
ता एव नन्द्याः परितोऽभिनेत्र्यो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥8॥

यथा कपिः कोऽपि जहातिशाखां स्वैरं यथाभीष्टमितस्ततो वा।
तथैव भोक्तॄन् परिवर्तयन्ति दृष्ट्वेति मे विस्मयमेति चित्तम् ॥9॥

कुलं न शीलं समयो न धर्मो न चापि लोकाऽभ्युदयस्य चिन्ता।
अन्यो हि पन्थाश्चलचित्रभाजां दृष्ट्वेति मे विस्मयमेति चित्तम् ॥10॥

गूह्यातिगूह्यानि जुगुप्सितानि वृत्तान्यवाच्यानि विगर्हितानि।
स्वैरं प्रदर्श्यन्त इहाधिय[1]न्त्रं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥11॥

1. दूरदर्शनाख्ये।

स्फुटान्यमर्यादितचुम्बनानि गाढोपगूढानि रतिक्रियाश्च।
प्रदर्श्यते सर्वमहोऽर्थलुब्धैर्दृष्ट्वेति मे विस्मयमेति चित्तम् ॥12॥

न सन्ति तेषामपि किं युवानस्सुता युवत्यस्तदुपक्रमोत्काः ?
कश्चिन्तयेन्नाम तदीयभव्यं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥13॥

विलूननासस्य रुचिर्यथाऽऽस्ते निर्णासिकत्वे जगतां समेषाम्।
लोकक्षये तेऽपि तथैव लग्ना दृष्ट्वेति मे विस्मयमेति चित्तम् ॥14॥

यत्साम्प्रतं लम्पटबण्डभण्डा अङ्गुष्ठमुद्रामितवेदुषीकाः।
चरन्ति लोकेषु सहस्रसंख्या दृष्ट्वेति मे विस्मयमेति चित्तम् ॥15॥

सेयं नवा संस्कृतिरस्मदीया विभाति राष्ट्रे चलचित्रदत्ता।
कृतस्समाजो ननु वेशवाटो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥16॥

गर्भो यथा सम्भवतान्त सद्यो निगीर्य तद्रोधासमर्थपथ्यम्।
प्रसार्यते नित्यमिदं सघोषं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥17॥

क्व जन्मदाता जनकः क्व पुत्री क्व सोदरौ ज्येष्ठकनिष्ठकौ वा?
सर्वे सहास्थाय पिबन्त्यपेयं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥18॥

न यन्निगूढं प्रमदेतिवृत्तं पुम्भिस्समाजे श्रवणीयमासीत्।
तैरक्षिलक्ष्यीक्रियते तदेव दृष्ट्वेति मे विस्मयमेति चित्तम् ॥19॥

नग्नं युवानं रतिवृत्तविग्नं समीक्षते मुक्तभया कुमारी।
अधोरुकाङ्क्षी युवकस्तथा तां दृष्ट्वेति मे विस्मयमेति चित्तम् ॥20॥

आचार्यवर्यैर्भरतैर्निषिद्धं यद्यत्पुरा सर्वजगन्मनोज्ञैः।
प्रसार्यते हन्त तदेव सर्वं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥21॥

यथा रजः स्रावविधिस्समक्षं मुहुर्मुहुः शीलकृतां गुरूणाम्।
उद्घोष्यते रोधकराभ्युपायैर्दृष्ट्वेति मे विस्मयमेति चित्तम् ॥22॥

गृहेषु नारीजनवेदनीयं प्रसङ्गजातं यदभूद्रहस्यम्।
तद्वाच्यते सर्वजनप्रकाशं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥23॥

क्व गोपनं सम्प्रति भावनानां स्त्रियोचितानां क्व च शीलरक्षा?
सर्वं विपन्नं नवसंस्कृतौ तद् दृष्ट्वेति मे विस्मयमेति चित्तम् ॥24॥

क्व यास्यतीयं तटिनी प्लवोत्था संस्कारसद्वृत्ततटङ्कषोग्रा?
क्व संस्कृतिः सङ्गमनी वसूनां दृष्ट्वेति मे विस्मयमेति चित्तम् ॥25 ॥

हा हा विपन्नं परिलक्ष्यतेऽद्धा भूरलराष्ट्रं ननु भारताख्यम्।
न रक्षकस्तस्य विभाति कोऽपि दृष्ट्वेति मे विस्मयमेति चित्तम् ॥26 ॥

श्वभ्रे पतन्ती ननु भारतीया न वार्यते संस्कृतिरार्षमूला।
केनापि विज्ञेन बुधेन शास्त्रा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥27 ॥

नाग्रेसरत्येव न याति पश्चात् सव्येतरे नापि च सव्यभागे।
नोच्चैरधो वा स्थितमद्य राष्ट्रं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥28 ॥

जातं न किं सम्प्रति लोकतन्त्रं राष्ट्रेऽस्मदीये किल शोकतन्त्रम्?
यस्मिन् समुज्जृम्भत एव दुःखं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥29 ॥

न केऽपि दावाग्निशमे सयत्ना न चाऽप्यरण्याश्रियमाप्तुकामाः।
ज्वलत्यतस्सर्वत एवं सर्वं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥30 ॥

ये श्रद्दधाना ननु साम्यवादे धर्मच्युता नास्तिकताऽभ्युपेताः।
ते संसदि प्रज्ञपयन्ति धर्मं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥31 ॥

वृद्धाधमोऽद्यापि स सोमनाथः सन्देग्धि श्रीराघवजन्मवृत्तम्।
प्रस्तौत्यहो नारकवाचिकं स्वं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥32 ॥

कुषाणहूणादिवदार्यसंघानपीह केचिद्बहिरागतांस्तान्।
मत्वा तुरुष्कैः सह लोलयन्ते दृष्ट्वेति मे विस्मयमेति चित्तम् ॥33 ॥

प्रतीयते विक्रयपण्यवीथी स्वराष्ट्रमाहात्म्यलसद्गरिम्णः।
खलम्भरा संसदहोऽस्मदीया दृष्ट्वेति मे विस्मयमेति चित्तम् ॥34 ॥

स्फुटं न कस्यापि वचोऽधिहट्टं संश्रूयते हन्त कृतेऽपि यत्ने।
तथैव कोलाहलिनी सभेयं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥35 ॥

न कोऽपि सम्यग्यतते समेषां सस्नेहमेकीकरणाय धुर्यः।
सर्वे पृथक्त्वाय समिद्धवीर्या दृष्ट्वेति मे विस्मयमेति चित्तम् ॥36 ॥

ईदोत्सवे मुस्लिमपंक्तिधुर्याः केचित्स्वशाठ्याभिनयं वहन्ति।
तत्केवलं हा मतपत्रसिद्ध्यै दृष्ट्वेति मे विस्मयमेति चित्तम् ॥37 ॥

हिन्दुत्वमेव स्वकुलक्रमाप्तं निन्दन्ति केचित्परतुष्टिलोभात्।
इतोऽवमानश्च ततो न मानो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥38॥

स्वाज्ञानभारोपहताश्च केचित् मनुस्मृति सर्वविपत्तिमूलाम्।
मत्वा मनुं साधु विगर्हयन्ति दृष्ट्वेति मे विस्मयमेति चित्तम् ॥39॥

कोऽयं पुनः क्षालयितुं प्रयासः पङ्केन पङ्कं क्रियतेऽल्पधीभिः?
वृथा श्रमो नैव च पङ्कमुक्तिर्दृष्ट्वेति मे विस्मयमेति चित्तम् ॥40॥

तमस्तमस्काण्डमहो प्रसूते विभा विभाञ्चेति निसर्गरीतिः।
तदन्यथा चिन्तयते किमर्थं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥41॥

न वारिभिः पङ्कचयापनोदो विधीयते बुद्धिमता किमर्थम्?
कथं प्रतीपे पथि पक्षपातो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥42॥

ये लम्पटाः स्त्रीजनशीलभक्षास्त एव हा तच्छिविकां वहन्ति।
क्व सम्भवं तत्कुशलं वधूट्या दृष्ट्वेति मे विस्मयमेति चित्तम् ॥43॥

परस्परं ये प्रतियोधयन्ति स्वैरं तुरुष्कानथ हिन्दुवर्गान्।
चित्रं त एवोभयसन्धिकारा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥44॥

एते पुनश्शासनतन्त्रकीटाः स्वासन्दिकारक्षणमात्रयत्नाः।
विद्वेष्य लोकान् स्वयमात्मतुष्टा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥45॥

चौर्याय चौरानिमके भणन्ति प्रबोधयन्त्येव च रक्षिवर्गान्।
द्वन्द्वे द्वयोश्चापि सुखान्यमीषां दृष्ट्वेति मे विस्मयमेति चित्तम् ॥46॥

विलीयते नाम्बुनि जातु तैलं तथा यथाऽदो लवणं सिता वा।
उपेक्ष्यते हन्त तथापि सत्यं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥47॥

तुरुष्कहिन्दू न समादरौ स्तः यावद्धि राष्ट्रे समधर्मनिष्ठौ।
तावन्मुधा शान्तिसुखप्रयासा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥48॥

अद्यापि हिन्दूनथ हिन्दुराष्ट्रं स्वपूर्वजैर्ये जितमामनन्ति।
तेषां जडानां क इवोपचारो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥49॥

मजारदर्गाहमहोत्सवेषु न हिन्दवः किं शतशः प्रयान्ति।
तथापि रामे न तुरुष्कनिष्ठा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥50॥

मुहम्मदो नात्र भुवि प्रसूतस्तथापि तस्मिन् महती प्रसक्तिः।
रामेऽत्र जातेऽपि कथं न निष्ठा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥51॥

पैगम्बरोऽसौ परमेशदूतो रामस्तु साक्षात्परमेश एव।
तथापि विद्वेषमयी कुदृष्टिर्दृष्ट्वेति मे विस्मयमेति चित्तम् ॥52॥

यस्सार्जवं नाद्रियतेऽन्यधर्मं स्वयं स धर्मो न च गौरवार्हः।
विद्वेषशिक्षो भवति क्व धर्मो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥53॥

विद्वेष्टि रामं मनुते न गीतां श्रद्धां न वेदत्रितये दधाति।
किम्भूय भुङ्क्ते स च भारतान्तं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥54॥

हिन्दुत्वविद्वेषपरास्तुरुष्का इस्लाममात्रैकरुचिप्रपन्नाः।
भिन्नाः कथं वाऽङ्गलशासकेभ्यो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥55॥

अतोऽधुनाऽपेक्ष्यत एव सम्यक् काचिन्नवा संस्कृतिरत्र राष्ट्रे।
न तद्विधाने क्रियते प्रयत्नो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥56॥

पूजागृहं स्यादिह यस्य कस्य भक्तिस्समेषां भवतात्प्रगाढा।
स्वभेददृष्ट्या क्व परेशभेदो दृष्ट्वेति में विस्मयमेति चित्तम् ॥57॥

धर्मान्धताजन्यपुराऽवमानप्रतीकभूतं ननु यत्प्रमाणम्।
सह्यं न तद् भारतभूमिभक्तैर्दृष्ट्वेति मे विस्मयमेति चित्तम् ॥58॥

सुरालयध्वंसरताः कृतघ्ना द्वित्रा नु चेद् वास्तविकास्तुरुष्काः।
रहीमदाररसखानयः के दृष्ट्वेति मे विस्मयमेति चित्तम् ॥59॥

नृशंसताया धुरि वर्तमानः पितुर्ग्रहो बन्धुनिकायहन्ता।
औरङ्गजेबोऽपि तुरुष्क एव दृष्ट्वेति मे विस्मयमेति चित्तम् ॥60॥

स्वपापवृत्त्या नृपशुर्न किं सः सन्तापकृद्यो हि विशां मदानन्धः।
हिन्दुर्न चासौ न तुरुष्क एव दृष्ट्वेति मे विस्मयमेति चित्तम् ॥61॥

एवंविधानां गणना न कार्या दुरात्मनां संस्कृतिपञ्जिकायाम्।
कलङ्कभूताः खलु ते पृथिव्या दृष्ट्वेति मे विस्मयमेति चित्तम् ॥62॥

मन्त्रः समः स्यात्समितिः समानी समानमस्माकमिदन्नु चित्तम्।
विनैक्यभावं प्रगतिर्न भाव्या दृष्ट्वेति मे विस्मयमेति चित्तम् ॥63॥

स्वशिक्षया प्रोन्नतिरद्य लभ्या ततो वृथा जातिकुलाऽवमानः।
परस्परं तर्हि कथं न रागो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥64॥

गङ्गाप्लवैरुह्यत एव सर्वं यथा मलं प्रावृषि नीरवेगैः।
विशोध्यतेऽद्धा न कथं स्वराष्ट्रं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥65॥

प्रशासनं यत्लपरं हि यावत्कस्यापि तुष्टीकरणेऽनुरोधात्।
न लोकमाङ्गल्यमुदेति तावद् दृष्ट्वेति मे विस्मयमेति चित्तम् ॥66॥

व्यथाकथेयं महती मदीया निवेदये हन्त कथन्तु कस्मै?
यो रक्षको भक्षयिता स एव दृष्ट्वेति मे विस्मयमेति चित्तम् ॥67॥

न्यायो हि मात्स्यो ग्रसते समाजं यथा शशं सोऽजगरो विषोग्रः।
प्रशासनं पङ्गु विलोक्यतेऽद्धा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥68॥

उत्कोचदानैः परितोष्य सम्यक् न्यायालयं न्यायपतिं विधिज्ञम्।
भ्रमन्ति मुक्ता वधिकाः समाजे दृष्ट्वेति मे विस्मयमेति चित्तम् ॥69॥

एकोऽपि चेद् ग्रामजनोऽधिवक्ता जातश्छलद्वेषपरार्तिलीनः।
तेनैव लोको नरकीकृतोऽसौ दृष्ट्वेति मे विस्मयमेति चित्तम् ॥70॥

गच्छन् पठन् स्वैरमटन् लपन्वा तिष्ठञ्छ्वसञ्जातु दिशञ्छयानः।
वाक्कील एषोऽनृतमेव भुङ्क्ते दृष्ट्वेति मे विस्मयमेति चित्तम् ॥71॥

सत्यं विजानाति न कस्समाजे तथापि तन्निर्णयनं न मान्यम्।
न्यायालये ऽ न्यायमवाप्य शान्ता दृष्ट्वेति मे विस्मयमेति चित्तम् ॥72॥

मुग्धाञ्जनान् योधयति प्रकामं वाक्कील एषोऽर्थपिशाचतुल्यः।
यावन्न ते हन्त भवन्ति नष्टा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥73॥

सर्वेऽधिवक्तार इहोग्रवीर्याः समं मृताः स्युर्यदि शल्यकल्पाः।
प्रतिष्ठितः स्यात्स्वयमेव धर्मो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥74॥

विद्यालयानां कियती प्रतिष्ठा विद्यालयं यान्ति यदीयसीम्नि?
क्व वाऽधुना तक्षशिलोपमानं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥75॥

अधीत्य कक्षासु नियुक्तपाठान् प्राध्यापकीभूय ततश्च यत्नैः।
आजीवनं ते छलयन्ति शिष्यान् दृष्ट्वेति मे विस्मयमेति चित्तम् ॥76॥

दिलीपगोसेवनमात्रतुष्टः कोऽध्येति पूर्णं रघुवंशकाव्यम्?
कादम्बरीं वा ससुखं समग्रां दृष्ट्वेति मे विस्मयमेति चित्तम् ॥77 ॥

वेदान् पुराणानि च दर्शनानि काव्यानि नाट्यानि च मुक्तकानि।
स्वान्तः सुखायाद्य न कोऽप्यधीते दृष्ट्वेति मे विस्मयमेति चित्तम् ॥78 ॥

कथम्मृता ज्ञानतृषाऽस्मदीया लोकैषणा हन्त कथं विनष्टा?
कुतो न्वियं लोलुपता धनानां दृष्ट्वेति मे विस्मयमेति चित्तम् ॥79 ॥

औद्दालकिर्यत्र यमं जगाद तवैव वाहास्तव नृत्यगीते।
तत्रार्थलिप्सोद्धतनग्ननृत्यं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥80 ॥

अध्यात्मविद्यामहिते स्वराष्ट्रे समागताऽनर्थकरी कुतस्त्या?
असंस्तुता सेयमहो पिपासा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥81 ॥

त्यागेन शास्त्राण्यमृतत्वमूर्ध्वं दिशन्ति जानन्नपि सत्यमेतत्।
सर्वोऽधुना भोगसुखप्रसक्तो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥82 ॥

सा संस्कृतिस्त्यागपरा पुराणी जाता कथं भोगपराऽस्मदीया?
वनीयकं विश्वगुरुं दिशन्ती दृष्ट्वेति मे विस्मयमेति चित्तम् ॥83 ॥

न सत्यपाः साम्प्रतिके समाजे न सद्गुणे चर्चितपक्षपाताः।
नाध्यात्मदृष्टिप्रचुरा न मान्या दृष्ट्वेति मे विस्मयमेति चित्तम् ॥84 ॥

उद्घोषकस्सम्प्रति विश्वशान्तेर्विभात्यशान्तः स्वयमेव शीर्णः।
हा हन्त देशो ननु भारताख्यो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥85 ॥

यत्साहितीसूत्रधरं कदाचित्स्वर्गास्पदं भारतभूमिरत्नम्।
काश्मीरराज्यं तदहो विपन्नं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥86 ॥

यतो नु माहेश्वरदर्शनाख्यश्शैवागमोऽनेहसि सम्मतोऽभूत्।
तत्रैव हा दैत्यचयाट्टहासो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥87 ॥

निष्कासिता आर्यजनाः समन्तात्, हृतञ्च सर्वस्वमहो तदीयम्।
धिक् शासनं क्लीबमनन्तपापं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥88 ॥

सीमामतिक्रम्य गृहे प्रविष्टा अनर्थजातं विदधत्यनल्पम्।
अरातयो हन्त वयञ्च मूका दृष्ट्वेति मे विस्मयमेति चित्तम् ॥89 ॥

किमत्र नो सैन्यबलं यथेष्टं चिकर्तिषा वा रिपुमस्तकानाम्?
क्लैब्यं कुतः किङ्कृतमार्जवं वा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥90॥

आचर्यते चेन्न शठेषु शाठ्यं राष्ट्रं क्षयं याति समुत्पतिष्णु।
न चार्जवं स्यात्कुटिलेषु नीतिर्दृष्ट्वेति मे विस्मयमेति चित्तम् ॥91॥

दुःखार्दितायां ननु मातृभूमौ धिग्जीवनं हन्त तदात्मजानाम्।
राष्ट्रे विपन्ने कुशलं नु केषां दृष्ट्वेति मे विस्मयमेति चित्तम् ॥92॥

स्वराष्ट्ररक्षार्थमतस्समन्तादमर्त्यपुत्राः समृगेन्द्रनादम्
सरन्तु न्याय्ये पथि सम्मुखीना दृष्ट्वेति मे विस्मयमेति चित्तम् ॥93॥

महीयसीयं द्युसदां धरित्री स्वयं हरिर्यत्र मुदाऽवतीर्णः।
तत्पादपद्माङ्कितधूलिरेषा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥94॥

हिमाद्रिसह्याद्रिपरीतपार्श्वं धौताजिरं पुण्यजलैर्नदीनाम्।
राष्ट्रं सहस्रायुतकोटितीर्थं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥95॥

सगर्वमेतत्खलु घोषणीयम् आर्या वयं हिन्दुकुलप्रसूताः।
अमर्त्यपुत्राः सततं स्वतन्त्रा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥96॥

सा देववाणी ननु संस्कृताख्या भाषाऽस्मदीया निगमागमर्द्धा।
यजूज्ञानहीनाः पशुभिस्समाना दृष्ट्वेति मे विस्मयमेति चित्तम् ॥97॥

गङ्गाञ्च गीताञ्च ततस्तृतीयां गीर्वाणवाणीमनवाप्य नूनम्।
त्रिरत्नहा व्यर्थजनिर्मनुष्यो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥98॥

अज्ञातगङ्गाजलसत्प्रभावा यथा न मुक्तिं शफरा लभन्ते।
तथैव राष्ट्रेऽसुरभारतीका दृष्ट्वेति मे विस्मयमेति चित्तम् ॥99॥

इतः परं वच्मि न किञ्चिदुग्रं हितं न पथ्यं भवतीति सिद्धम्।
रतिर्न कस्यापि ऋते च सत्ये दृष्ट्वेति मे विस्मयमेति चित्तम् ॥100॥

ध्रुवं त्रिवेणीकविरित्यविघ्नं ख्यातश्चिरं संसदि कोविदानाम्।
राजेन्द्रमिश्रोऽयमहोऽभिराजो निरङ्कुशो विस्मयमातनोति ॥101॥

न चाऽत्र निन्दा न च संस्तुतिर्वा न वा प्रतीकारजवाग्विलासाः।
सत्यं निरातङ्कमिदं मयोक्तं वराः प्रसीदन्तु खला भ्रियन्ताम् ॥102॥

निपीय काव्यामृतमेतदूर्ध्वः नवीकृताः स्युर्ननु राष्ट्रभक्ताः।
पतन्तु गर्ते विषमूर्च्छितास्ते स्वराष्ट्रविद्रोहरताः कृतघ्नाः ॥103 ॥

दर्शं दर्शमनारतं स्वजननक्ष्मावेदनां दुस्सहां
विद्वेषाग्निविधूननैकमनसां यत्नान् खलानां पुनः।
क्लीबत्वं किल शासनस्य सुचिरं सम्प्रेक्ष्य दोलायित
राजेन्द्रो लहरीचयं वितनुते व्यालोलसिन्धुप्रभः ॥104 ॥

शुद्धभाद्रपदे शुक्ले वैक्रमे खशिलीमुखे।
लोलार्कषष्ठ्यां रात्रौ मङ्गलेऽह्नि प्रपूरितम् विस्मयमेति चित्तम् ॥105 ॥

॥ इति त्रिवेणीकविना श्रीमद्दुर्गाप्रसादाभिराजीसूनुनाऽभिराज-
राजेन्द्रेण विरचिता विस्मयलहरी परिपूर्णा ॥

# निद्राविभूतिः

## के. एस्. रामानुजाचार्यः

पिनाकिनी तटे रम्ये शेषपर्यङ्कशायिनम्।
निद्रामुद्राभिरामं तं वन्दे श्रीरङ्गनायकम् ॥1॥

प्रपद्येय प्रपन्नार्तिहारिणीं शान्तिदायिनीम्।
निद्रां विद्रावयन्तीं न स्सर्वा विषयवासनाः ॥2॥

कुम्भकर्णमुचुकुन्दमुखास्ते तं प्रसाद्य तपसा भगवन्तम्।
त्वामवापुरितिशुश्रुमनिद्रे ज्ञायते तव महत्त्वमनेन ॥3॥

त्वक्त्वैकाकिनमत्रमां क्वनुगता निद्रेऽयि भद्रेरुषा
किं नामाऽपकृतं मया तव वद प्रत्येहि मामाश्लिष।
त्वद्विश्लेषकृशस्य मे न मधुराऽहारोऽपि हा रोचते
तलपं नाल्पमपि प्रयच्छति सुखंकामे त्वदन्या गतिः ॥4॥

ऊर्मिला पतिवियोगदशायां त्वामुपेत्यशरणं करुणालुम्।
सा निनाय हि चतुर्दशवर्षाण्यप्यहो क्षणमिव प्रियनिद्रे ॥5॥

इन्द्रोऽपि देव्यै जनकात्मजायै क्षीरं बुभुक्षोपशमाय दास्यन्।
त्वामाश्रयद्रावणराजधान्यां रात्रिंचरीणां किल मोहनाय ॥6॥

त्वां तामसीमाहुरहोऽनभिज्ञाः नेदं समीचीनतया विभाति।
कृष्णावतारे यदि ते सहायो नैवाभविष्यत्किमथाभविष्यत् ॥7॥

लक्ष्मीपतिनिखिललोकपतिस्स एषः नारायणोऽपि तव वश्य इति प्रसिद्धम्।
तेनैव सर्वजयिनीति न गर्वमीयाः एषोऽस्यहं न वशगस्तव पश्य निद्रे ॥8॥

सीतां रावणनीतां चिरयति रामे समानेतुम्।
सीतास्नेह वशादिव विहाय रामं किलाऽपयाताऽसि ॥9॥

तल्पंगतं यदिनरं समुपेत्यभद्रा
निद्रोपगूह्य विवशं न करोति गाढम्।
किं तस्य वित्तनिचयैर्वनिताशतैर्वा
किं वाऽधिकारविभवैः किमथाऽयुषा वा ॥10॥

आगर्भवासादथ चाऽप्रयाणात् प्रत्ताऽसि मह्यं विधिनाऽनुसर्तुम्।
सा त्वं कथं मां प्रविहाय मध्ये प्रयासिनिद्रे तदिदं न युक्तम् ॥11 ॥

स्वप्नेषु कान्ता परिरब्ध देहं विलोक्य मा मन्तरिताच्छलेन।
विहाय रोषादिव यासि निद्रे किमेषधर्मः कुलसुन्दरीणाम् ॥12 ॥

निद्राभङ्गं प्राणिनां नैवकुर्यादित्याख्यातं शास्त्रकारै र्विमृश्य।
निद्राभङ्गे कीदृशी हन्तबाधा स्यादित्येतैरन्वभावीति मन्ये ॥13 ॥

अस्त्रेषु यज्जृम्भकनामकं तत् निद्रे भवत्यास्मवाप्य साह्यम्।
निद्राप्यशत्रून् नृपपुङ्गवानां युद्धेषु यच्छत्यभयं जयञ्च ॥14 ॥

स्वमपीतो भवतीति स्वपितीति वदन्ति निद्राणम्।
तेनाऽर्धमुक्तिरेषानिद्रा नैवाऽर्धमरणमिति निन्द्या ॥15 ॥

औलूकदर्शनाभ्यासः दृढं मन्ये मयाकृतः।
यो मामवच्छेदकाऽवच्छेदेनान्वेति रात्रिषु ॥16 ॥

निद्रे त्वयावियुक्तस्य वैष्णवस्याप्यहो मम।
पक्षपातं विना सर्वाः रात्रयश्शिवरात्रयः ॥17 ॥

स्तनन्धापयन्ती शिशुं गोहिनीयं शरण्यीकृतोर्वतिला शीर्णचेला।
स्वदारिद्र्यदुःखं क्षुधार्तिञ्च तीव्रां क्षणंहन्त विस्मृत्य निद्राति गाढम् ॥18 ॥

गाढनिद्रापरिष्वङ्गसुखास्वादनशालिनाम्।
निद्राविरहिते स्वर्गे मोक्षे वा का रुचिर्भवेत् ॥19 ॥

लोकस्सर्वोऽपिनिद्राति मां विना सर्वतो निशि।
तावता संयमी स्यां चेञ्जितं तैस्तैर्निशाचरैः ॥20 ॥

जीवेदपि विनाहारं जीवेदपि जलं विना।
न तु निद्रां विना जीवेल्लोकोऽयमिति मे मतिः ॥21 ॥

स्रष्टा न निद्राति सदाऽप्यधीते हर्ता न निद्राति स नानटीति।
त्राता तु निद्राति सदाऽहितल्पे लोकस्थितेः कानु गतिर्भवित्री ॥22 ॥

उल्लोकसौन्दर्यनिधेर्विशिष्य यथार्थमिथ्या जगतो विधातुः।
स्वप्नस्य सेऽयं जननी मनोज्ञा निद्रापरा किं तनुरच्युतस्य ॥23 ॥

ज्योत्स्ना विशालधवलप्रच्छदपटसमवकुण्ठितासेयम्।
प्रकृतिरहो निष्पन्दं निद्रामुपयाति शर्वरीषु चिरम् ॥24॥

दूरप्रयाणखेदात्पान्थः कोऽप्येष वटतरोर्मूले।
स्वपिति मुखमादाय ध्रुवं न निद्रा प्रतीक्षते सौख्यम् ॥25॥

को विशेत् धूमशकटजनतापेटिकां निशि।
निद्रास्रस्त विपर्यस्त करोर्वंघ्रि शिरोमयीम् ॥26॥

निधायोत्तरस्यां दिशि स्वीयशीर्षं
गजः कोऽपिनिद्रामवाऽपाति गाढम्।
तदा तस्य शीर्षं निकृत्त्यामरास्ते
कबन्धे समायोजयन्विघ्ननेतुः ॥27॥

कविताप्रियोऽहमेतां कवये निद्रां प्रशंसमानस्तत्।
निद्राप्रयाति दूरादन्यासक्तं विभावयन्तीव ॥28॥

निद्राहारौनॄणां जीवितुमावश्यकौ तत्र।
धनिकदरिद्रादिभिदात्वाहारेनैव निद्रायाम् ॥29॥

मा सुषुप्थाः इति गुरोः आज्ञां धीरमतिर्वदुः।
दिवाऽहं न स्वपामीति प्रवदन् पर्यपालयत् ॥30॥

निद्रान्ति केचित् सुरमन्दिरेषु स्वाभीष्टसिद्धैः सुगृहीतदीक्षाः।
लब्ध्वा शुभस्वप्नमुखेन देव प्रासादमत्यन्तमुदं प्रयान्ति ॥31॥

सुखमहमस्वाप्समिति प्रतिबुद्धो वदति सौखशायनिकम्।
अस्पृष्टदुःखगन्धं सुखमेतदनुग्रहो निद्रायाः ॥32॥

इन्द्रघ्नं पुत्रमिच्छन्तीं तपस्यन्तीं दितिं वृषा।
अकाले निद्रितां वीक्ष्य तद्भ्रूणं सप्तधाऽच्छिनत् ॥33॥

वर्मिच्छिन्नज्या विनिकृत्तं शीर्षं विष्णोः स्वातो वीक्ष्य।
हयशिरसा तं संधाय सुराः तत्साहाय्यादसुरानजयन् ॥34॥

श्वा भस्मकुण्डे निद्राणाः पूर्वजन्मकृतं स्मरन्।
अनिन्द्याचरितं वांछत्यथ विस्मरति क्षणात् ॥35॥

जागरमेकादश्यां विदधति शास्त्राणि तत्कथं विष्णुः।
एकादश्यां शेते रम्यस्सोऽयं गुरूपदेशनयः ॥36॥

अतिनिद्राः किलसर्पाः तेषामीशानमधिशयानोऽसौ।
गाढं निद्राति हरिः प्रबलस्संसर्गजो दोषः ॥37॥

ब्रह्मा निद्राति यदा प्रलयो जगतस्तदा भवति।
तद्दृष्टि सृष्टमेतत्किमुनिष्पन्दं शरीरमथवाऽस्य ॥38॥

पिबति सुखनिद्रायै बाधार्ता हि नरास्सुराम्।
सुरापानप्रसिद्धास्ते कथं न्वनिमिषा स्सुराः ॥39॥

वटदलमधिगत्य मुद्रा प्रलयाब्धौ कोन्वयं शिशुश्शेते।
इति सुचिरं निर्वर्ण्य प्रत्यभिजज्ञे हरिं तमृषिवर्यः ॥40॥

मामपिनाऽहमवेदिषमितिबोधो भवति यस्य निद्रान्ते।
धन्यतमस्सखलु पुमान् जीवतु शरदां शतं सुखं जगति ॥41॥

---

# श्रीमद्रामायणवैभवम्

## समुद्रान्न लक्ष्मणय्य

### वाल्मीकिः

येन प्रतिष्ठिता कीर्तिपताका जानकीपतेः।
आदिकाव्यप्रणेतारं तं वन्दे मुनिपुङ्गवम् ॥1॥

क्रूरव्याधशराविद्धाद्विजसन्दर्शनोद्भवः।
वल्मीकजमुने शोकः श्लोकोऽभूल्लोकपावनः ॥2॥

### रामकथा

श्रुत्वा रामकथानादं पीत्वा रामकथा सुधाम्।
ध्यात्वा रामकथातत्त्वं को न याति परां गतिम् ॥3॥

### रामः

रामपादाम्बुजध्यानं रामनामानुकीर्तनम्।
रामस्य सेवनं चैव कर्तव्यं करणैस्त्रिभिः ॥4॥

तापत्रयप्रतप्तानां भवारण्यैकचारिणाम्।
बिना रामरसं नान्यच्छामकं परिदृश्यते ॥5॥

### सीता

यां स्पृष्ट्वाऽग्निस्स्वयं शुद्धिमगमत्सर्वभक्षकः।
नत्वा तां जानकीं भक्त्या को न मुच्येत किल्विषात् ॥6॥

बहूनि कष्टान्यनुभूतवत्यां
देव्याश्चरित्रं जनकात्मजायाः।
पठन्मनुष्यो निखिलव्यथाभ्यः
सद्यो विमुक्तो भवतीति चित्रम् ॥7॥

### हनूमान्

जीवदेवाविति प्रोक्तौ सीतारामौ हि सूरिभिः।
हनूमन्तं विनाऽऽचार्यं तयोर्योगः कथं भवेत्? ॥8॥

अवक्रविक्रमोपेतः स्वामिभक्तिपरायणः।
अञ्जनातनयो नित्यमाराध्यो भक्तसन्ततेः॥9॥

## कामो रामश्च

वेदवेदाङ्गवेत्ताऽपि युक्तोऽपि बहुभिर्गुणैः।
कामेनैकेन दोषेण रावणो दूषितोऽभवत्॥10॥

कामो धर्मानुकूलश्चेत् सेव्यतां नात्र संशयः।
सचेद्धर्मविरुद्धः स्यात् सर्वनाशकरो भवेत्॥11॥

कामो रामश्च नैकस्य हृदये वासमर्हतः।
दूरतः परिहर्तव्यः कामो रामार्थिभिर्जनैः॥12॥

## उपदेशः

रामादिवत्सदा धर्मनिष्ठैर्भाव्यं जनैरिह।
न रावणादिवद्दुष्टैर्भवितव्यं कदाचन॥13॥

रामायणोपदेशस्य सारांशोऽयमुदाहृतः।
अमुं धर्ममवाश्रित्य नरो नारायणो भवते॥14॥

## स्थितप्रज्ञः रामः

दुःखे त्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
स्थितप्रज्ञ इति प्रोक्तो गीताचार्येण भारते॥15॥

अभिषेकार्थमाहूतः स्पृहां न प्राप राघवः।
वनं गन्तुं समादिष्टो नोद्वेगमपि चाप सः॥16॥

सुखदुःख समावस्थं रागेद्वेषविवर्जितम्।
राजीवलोचनं रामं स्थितप्रज्ञं नमाम्यहम्॥17॥

## महात्यागी रामः

अमृतत्त्वफलप्राप्तिस्त्यागमूलेति कीर्त्यते।
रामादन्यो महात्यागी नैव दृष्टो न च श्रुतः॥18॥

## सौमनस्यम्

वर्धतां सौमनस्यं वो रामलक्ष्मणयोरिव।
दौर्मनस्यं तु नैवास्तु वालिसुगीवयोरिव॥19॥

## अनन्यभक्तिः

अनन्यभक्तिरेकैव रामानुग्रहकारणम्।
न कुलं न च सम्पत्तिश्शवर्यत्र निदर्शनम् ॥20॥

## दैवी प्रवृत्तिः

नराणां वानराणां च दानवानां प्रवृत्तयः।
प्राचेतसेन मुनिना चित्रिताश्चित्ररीतयः ॥21॥

दैवी तथाऽऽसुरीचेति प्रवृत्तिर्द्विविधा मता।
दैवीं प्रवृत्तिमाश्रित्य जीवो बन्धाद्विमुच्यते ॥22॥

## धर्मपरो रामः

तत्याज राज्यं तत्याज सीतामपि स राघवः।
धर्मसेवां न तत्याज यदर्थं भुवमागतः ॥23॥

धर्मतत्त्वस्वरूपाय रामचन्द्राय मङ्गलम्।
मङ्गलं रामभक्तेभ्यो नित्यशीर्नित्यमङ्गलम् ॥24॥

---

# जातीयसमग्रता

**एस्. बि. एस. भट्टाचार्यः**

श्रियस्समेषाञ्च भवन्तु सन्ततं परस्परं प्रीतियुता जनास्सदा।
प्रशान्तचित्ता गतभेदभावना भवन्तु देशोद्धरणैकदीक्षिताः ॥1॥

प्रजा विभक्ता यदि तर्हि जीवनन्त्वशान्तिपूर्णं भवतीह दुर्भरम्।
सदापि जातीयसमग्रतामतेः प्रचारणे स्याम दृढानुरागिणः ॥2॥

विशालदेशस्य समैक्यभावना समग्रजातेरभिवृद्धिकारणम्।
जनैः प्रमत्तैर्यदि विस्मृता भवे त्तदा हि दास्यं पुनरेव निश्चितम् ॥3॥

विभिन्नभाषास्वपि साम्यभावना चिरात्प्रसिद्धा किल भारतावनौ।
शिवङ्करी सा हि विदेशविश्रुता किमद्य दौर्भाग्यवशेन विस्मृता ॥4॥

न केवलं शान्तियुतन्तु जीवनं न केवलं पौरजनेषु मित्रता।
अशान्ति सूर्यस्य विजृम्भणे नृणां प्रशान्ति सौहार्दलता विशोष्यते ॥5॥

अहं मदीयं मम प्रान्त उत्तमः ममैव जातिस्सुजनैस्सुशोभिता।
परे तु निन्द्या इति भावयन्ति ये त एव देशस्य विनाशहेतवः ॥6॥

जनास्स्वदेशोद्धरणैकदीक्षिता भवन्ति चेदात्मगुणैस्समन्विताः।
जनार्दनश्चाश्रित भक्तवत्सल स्तमेव देशं त्रिदिवं करिष्यति ॥7॥

चिरात्समग्रे किलभारते जनास्सतां मुनीनां वचनेषु गौरवात्।
परस्परं विस्मृतभेदभावनास्समाजसेवानिरताः प्रकीर्तिताः ॥8॥

समग्रताभङ्गकरा नराधमा भवन्ति साधुष्वपि बाधकास्सदा।
खलैस्स्वदेशैक्य विघातकैर्जनैः कदापि वो मास्तु चिराय मित्रता ॥9॥

प्रजासु वैरं जनयन्ति येऽनिशं प्रबोधनैस्तामसभावनामयैः।
खलाश्च ते देशसमैक्यभञ्जकाः उपेक्षणीया न कदापि सज्जनैः ॥10॥

भाषाविभिन्ना यदिसन्तुकामं देशोऽयमेकोऽस्त्विति भाव ईड्यः।
भिन्नानि चेत्सन्तु मतानि लोकेदेवश्च सर्वैरपि पूज्य एकः ॥11॥

भावास्समाना हि भवन्तु नित्यं वैषम्यभावस्सुतरामयुक्तः।
एकस्य देशस्य विभिन्नभाषाः संमूढयन्त्यल्पधियो न विज्ञान् ॥12॥

यन्नास्ति चेन्नास्ति पुरोभिवृद्धिः यस्यालये शान्तिसुखादिहानिः।
देशाभिवृद्धौ किलमूलभूतं जातीयमैक्यं तदपेक्षणीयम् ॥13॥

रामो रहीमो जिन एसुबुद्धौ अन्ये प्रसिद्धा गुरुनानकाद्याः।
सत्यं दमञ्चार्जव मार्तरक्षां निस्स्वार्थसेवां किल बोधयन्ति ॥14॥

भाषाविभेदमधिकृत्य कृतो विभागः देशैक्य भञ्जनको न कदापि भूयात्।
भिन्नैस्सुमै र्विरचितापि च पुष्पमालाचक्षुष्मतां सुमनसां हि तनोति मोदम् ॥15॥

अयं मदीयस्स तु नास्मदीयः ममैव राज्यं सुजनैस्समग्रम्।
इतीह यच्चिन्तनमस्ति लोके निदानमेतन्निखिलाशुभानाम् ॥16॥

रामराज्यमिति विश्रुतं चिरात्सर्वदेशजनकीर्तितञ्च यत्।
तद्धिराज्यमिदमद्यनायकैस्स्वार्थचिन्तनपरैस्समावृतम् ॥17॥

प्रजाप्रभुत्वे खलु देशभक्तैर्नियोजकैस्सत्पुरुषा नियोज्याः।
अपात्रनिर्वाचनमेव नूनं समाजदौर्भाग्य शतस्य मूलम् ॥18॥

देशभक्तियुतनायकैस्सदासाम्यभावपरिपोषणे मुदा।
उद्यमोऽद्य करणीय उद्धृतस्तं विना जनहितं भवेत्कथम् ॥19॥

जयतु जयतु नित्यं भारते देववाणी
जयतु जयतु भव्यो भारतश्शान्तिपूर्णः।
भवतु भवतु भद्रं भिन्नराज्याश्रितेभ्यः
भवतु भवतु मैत्री सर्वसंपत्प्रदात्री ॥20॥

---

# नीतिमन्तो भवन्तु

ईश्वरसीतारामधन्वन्तरिः

वाग्देवीपदमञ्जीरशिञ्जिनीकिलिकिञ्चितम्।
दद्याद्वो नवशर्माणि श्रावणे मासि वार्षुके ॥1॥

नाहं जाने सरसकवनं नैव जाने च गद्यम्
नाहं विद्वान्विदितयशसां वाग्मिनां नाग्रगामी।
जाने नाहं पदपरिमलं भावसौभ्रात्रमत्था
मन्तुं क्षन्तुं सदयहृदयान्. प्रश्रितोऽहं बभिक्षे ॥2॥

नाहं जाने नवरसकथां छन्दसां वल्गुरीतिं
सालङ्कारं वचनमथवा यन्मनोमादनं वः।
पीतं किञ्चिद्बुधमुखस्रुतं वाङ्मरन्दं मनाग्वा
मन्तुं वाचां प्रविमलधियः क्षन्तुमर्हन्त्यशेषम् ॥3॥

नानाशास्त्रविचारसारमतयः वल्गन्ति ये भारते
ये ते संस्कृतभारतीपदरजः पूतोत्तमाङ्गा बुधाः।
सर्वे विद्वदपश्चिमाश्च निकषाः साहित्यहेमापणे
भूयासुश्शिवतातये भुवि चिरं स्वे स्वे पदे भावुकाः ॥4॥

जयतु जयतु भाषा नव्यपीयूषवेषा नवयुवतिकटाक्षाक्षेपशालीनताढ्था।
मधुविकसितपुष्पामोदसम्पूतदिक्का सुममृदुलपदैषा नाकिनां रम्यभाषा ॥5॥

सष्टाङ्गं प्रणिपत्य ब्रह्ममहिर्षीं वावन्द्य वन्द्यान् गुरून्
नानम्यास्मदुपास्य देवचरणं मित्राणि वै तोष्टुवन्।
शब्दब्रह्मविदां च पादकमलं संख्यावतां प्रास्पृशन्
प्रोच्यन्ते निगमाशिषश्शिवकरास्साहित्यसाम्राज्यदाः ॥6॥

शिक्षा नास्ति हि धार्मिकी जगति सा वैदेशिकी दीप्यते
गैर्वाणी च पलायते विजयते भाषा तु म्लेच्छोदिता।
पथ्यं यत्रु पुरातनं च तनुतां यात्यद्य श्रौतं वचः
तत्सर्वं ऋजुतां नयन्तु गुरवः सर्वप्रयत्नैरलम् ॥7॥

गगनमिदमिदानीं याति कालुष्यनैल्यं
हृदयमपि दुराशासर्पदष्टं जनानाम्।
तदनुभयमभीक्ष्णं चाणवीशक्तिजातं
भवतु विभुरनन्तः वर्मणे शर्मणे नः ॥8॥

गैर्वाणीमभिवर्धयन्तु कवयः काव्यानि कृत्वा शतं
गीर्वाणाश्च समेधयन्तु धरणीं कालेषु वर्षागमैः।
पृथ्वीं शास्तु च पालको निजसुखत्यागी प्रजाकिङ्करः
भूतानां हितकाम्यया श्रमधनाः दीव्यन्तु सर्वे जनाः ॥9॥

सत्यान्नास्ति भुवि प्रकामसुलभो धर्मप्रतिष्ठाकरः
अस्तेयोऽप्यपरिग्रहः परसुखापेक्षं मनोनिर्मलम्।
एतेषामवलम्बनेन सचिवाः श्रीवाजपेयीहिताः
शान्त्यानन्दसमन्वितं क्षितितलं कुर्वन्तु नाकोपमम् ॥10॥

शाम्यन्तु सर्वदुःखानि प्रजास्वाम्यं प्रवर्धताम्।
काश्मीर श्शान्तिमाप्नोतु विनैव रणमारणम् ॥11॥

हिन्दूमुस्लिं क्रैस्तवा बौद्धजैनाः देशे पुण्ये मातृभावं प्रकल्प्य।
हित्वा वैरं भूतले मैत्रपूर्णाः शान्त्यै भूत्यै कल्पयन्तामिदानीम् ॥12॥

विद्याग्रतो धनचयस्तृणवत्कृतो यैः
स्वान्तस्सुखाय कविता विहिता, न कीर्त्यै।
छाया च देहमिव तान्न जहाति कीर्तिः
ते पुण्यपुञ्जरसहृत्कृवयो जयन्तु ॥13॥

हंसीव मिश्रजलदुग्धविवेकबुद्धिं
पीता ददात्वभयदा शुभदा तमोघ्ना।
सा शारदा भगवती वरदानशीला
जिह्वाङ्गणे च हृदि वास्यतु सर्वशुक्ला ॥14॥

सुभगभरतभूम्यां भक्तिभावप्रपूर्णाः
परमपि समबुद्ध्या चात्मवत्कल्पयन्तः।
जनगणहितहेतोः तत्त्वतो यत्नशीलाः
पुनरिह सचिवास्ते नीतिमन्तो भवन्तु ॥15॥

निरामयानन्दमगत्वरश्रियं दिगङ्गनाघ्रातयशःपरीमलम् ।
निरामयं वर्षशतायुषं च वः दत्वावताद्वेङ्कटनायिका रमा ॥16 ॥

घोरे कलौ प्रतिदिनं भुवि धर्ममार्गः
हन्ताऽपकर्षमधुना नितरामुपैति ।
तस्योन्नतिं जनिमतां विभुरात्मसाक्षी
कुर्यात्पुरा वदमलां हरिवेङ्कटेशः ॥17 ॥

कर्पूरद्रवशीकरप्रणयिनः कल्हारमालानिभाः
चन्द्रालोकसनाभयः परिमलच्छीगन्ध पाणिंपयाः ।
क्षीराम्बोधिप्रभासभङ्गसुहृदः दीव्यन्तु नः श्रेयसे
वाग्देवीसदयामृतार्द्रपृषतः नेत्रान्तसीमोद्गताः ॥18 ॥

# क्षणदा क्षयिता

सीतानाथ आचार्य

पथविस्मरणादिवागता मम जीर्णे कुटिरे कदापि सा।
असितायतचञ्चलेक्षणा घनकृष्णालकभूषणा शुभा ॥1॥

तरुराजिविराजिते स्थले चलति स्माथ रुगन्धकारयोः
मिलनं निभृतं मनोरमं मृदुलस्पर्शनकम्पनान्वितम् ॥2॥

मुकुलं सुमनोहरं दृशोर्व्रततीवक्षसि बृद्धिमागतम्।
श्वसनाकुलपत्रसञ्चरे मुहुरात्मानमधात् तिरोहिसम् ॥3॥

गिरिनिर्झरिणी कलस्वना स्नपयन्तीव सहस्रधारया।
रसवेगसमुच्छलामला गिरिमालिङ्ग्य मुदा वहत्तराम् ॥4॥

शशिनः करराशिभिस्तदा परितः प्लावितबन्धुरेऽम्बरे।
पवनैरभवद् विकम्पितं वनचित्तं मम चित्तवन्मुहुः ॥5॥

रजनावभितो विमोहिनीं प्रगतायां किल रूपशालिताम्।
नवभावरयाभिचुम्बिनी हृदयाद् भ्रश्यति शान्तततागुणे ॥6॥

निखिलं परिमण्डलं ध्रुवं सहसापार्थिवतामुपागतम्।
मुदिता प्रकृतिर्वनान्तरे हसतीव स्मयमानपुष्पका ॥7॥
(युग्मकम्)

स्मयितं हसितं निरीक्षितं क्रमहीनं बहुजल्पितं मुहुः।
द्वितयं द्वितयं चतुष्टयं समभूज्जागरितं दृशाञ्च नौ ॥8॥

अथ सा सहसा समुत्थिता वनभूमौ भ्रमितुं कृतैषणा।
मयकाव्यवशेन चेतसानुसृता सा मेदिरानना शुभा ॥9॥

विविधावचिता लताततिः कुसुमानां निचय सपल्लवम्।
समलंकरणं परस्परं प्रणयैः साधमलं प्रकल्पितम् ॥10॥

स्वकरेऽन्यकरं करम्बितं सुखमादाय मुदान्वितान्तरम्।
भ्रमणं विहितञ्च मन्थरं कृतगीतिध्वनिमूर्च्छनं स्वयम् ॥11॥

भुवि वृक्षतले सरित्कुले निशि तस्यां रमितं यथेप्सितम्।
हृदयद्वयभिन्नभावना सहसाभिन्नदशाप्तबन्धना ॥12॥

मुदिताजलधौ निरन्तरं परितृप्तं प्लवनं समञ्चितम्।
अमृतं सुरलोकदुर्लभं परिपीतं मयका तया समम् ॥13॥

अथ सा मम भुग्नमन्दिरं कृशदीपद्युतिभाङ् मया सह।
विशति स्म निजेच्छया पुनर्विकिरन्ती शतकौमुदीद्युतिम् ॥14॥

विपिनेन हि नन्दनायितं गृहकेन त्रिदिवायित्तं तदा।
हृदयेन विमोहितं मम वदनेनोपगता च मौनिता ॥15॥

क्रमशः परिमूढताश्रितेन्द्रियवर्गैर्मम निर्वृतात्मनः।
विहितासवपानवत् क्षणमहमासं प्रविलुप्तचेतनः ॥16॥

क्षणदा क्षणदा क्षयं गता क्षयितं स्वप्नसुखं समुज्ज्वलम्।
स्रगपि स्खलिता स्वकण्ठतः कुसुमेभ्यो हसितञ्च विद्रुतम् ॥17॥

अलसैश्चरणैर्गृहान्तरात् प्रगता सा पथिका निशाक्षये।
चपला चपलोदयैः स्वकैर्ननु संवर्धयते तमस्ततिम् ॥18॥

नयने नयने पिपासुतागतिरद्य प्रगतासूता गता।
हसिते हसिते मनोरमा सुषमा सास्तमिता तथैन्दवी ॥19॥

हृदये हृदये तरङ्गिता स्तिमिता दर्शनमात्रमुच्छला।
लसति श्रवसोरनाविला वचसो गीतिमयी न मुर्च्छना ॥20॥

असकृद् रजनीक्षणे तदा नवसंस्पर्शवशादुदीरिता।
विकशत्प्रियकाङ्क्ष्यष्टिता स्मृतिमात्राश्रयता गताधुना ॥21॥

धरणिर्गतयौवना द्युतिः ऋतुचक्रे क्रमते न माधवी।
कुहुरावततिः सुदुःसहा हततारा गगनाङ्गनाधुना ॥22॥

यमुनातटमञ्जुवञ्जुललतिकाकुञ्जमहो वितन्द्रितम्।
न हि वेणु निनादमाधुरीलहरी प्लावयते हि साम्प्रतम् ॥23॥

अतिजोर्णमरण्यमेव मे जगतोयं प्रतिभाति मानसे।
हतजीवप्रयोजनं ममावसितं साम्प्रतमित्यहो मतिः ॥24॥

हरिणो वनचारिणो गता वनभूमिं त्वमेव योगता।
स्मृतिमापतिता मुहुर्मुहुः हृदयं पीडयतीव मे सदा ॥25॥

हृदयं पीड्यतीव मे सदा ॥

---

# भारतगौरवम्

## कैलाशनाथद्विवेदी

अयं सुदेशः सुखशान्तिकेन्द्रः स्वधर्मसेवी धनधान्यपूर्णः।
सदैव शुभ्रो यशसैव भाति, विभासितो भारतवर्षदेशः ॥1॥

हिमालयः पर्वतराजतुंगः, रम्यैः स्वशृंगैर्गुरुतां दधाति।
स्थैर्यस्य शिक्षां सततं प्रदाय, पुष्णाति धैर्यं भुविभारतानाम् ॥2॥

नद्यः नदा निर्झररम्यरूपाः, वहन्ति नित्यं नवलाः नदन्तः।
सरोवरास्तोयनिधी पवित्रौ, तीर्थानि नैकानि च पावयन्ति ॥3॥

नराः सुवीरा व्रतिनो महान्तो, युद्धे महाकालसमाः प्रचण्डाः।
घोरा अजय्याः यमराजरूपाः, यशोधराः धैर्यघना अलंघ्याः ॥4॥

स्वदेशरक्षार्थधृतं स्वदेहं, गेहं च प्राणान् युधि ये त्यजन्ति।
धन्याः धरायां धुरि भारतीयाः, भास्वन्ति युद्धेऽविमुखा अजेयाः ॥5॥

सत्यः सुशीलाः पतिभक्तियुक्ताः ज्वाला इवेमाः रणचण्डिकाश्च।
वीराङ्गना युद्धभुवि प्रसिद्धाः, भीमा इमाः भास्वरकान्तिकल्पाः ॥6॥

निन्द्यं रणं वै रमणीसमं हि, वीराः विमुञ्चन्ति न तासु शस्त्रम्।
सशस्त्रदाराः समरे यदि स्युः, कुर्वन्तु किं मानधना उदाराः ॥7॥

तेजस्विनो बालकयुद्धवीराः रणेऽभिमन्योरिव दिव्यरूपे।
शत्रोः समक्षे भयत्रासशून्याः, कीर्तिं लभन्ते भुवि राजपुत्राः ॥8॥

शस्त्रैः शरीरं व्रणितं समस्तं रक्तस्य धारा वहतीव वेगात्।
मनश्च प्राणाः विजिता यदा न, तदाऽत्र योद्धाऽविजितो रणे वै ॥9॥

वीरभूमिरियं नित्यं नरनारीकिशोरकैः।
रणे शत्रोः समक्षे वै, वीरावेशेन भान्ति ये ॥10॥

शस्त्रास्त्रैर्नैव एतांस्तु पराजेतुं रणे क्षमः।
अजेयाः शत्रुभिर्वीराः प्रेम्णैव विजिता हृदा ॥11॥

# श्री आञ्जनेयस्तोत्रम्

## जोश्युलसूर्यनारायणमूर्तिः

श्रीगंधमादननिकेतन! वायुसूनो!
श्रीपारिजाततरूमूलनिवासभासिन् ।
श्रीरामनामपरिकीर्तननंदितात्मन्!
श्री आञ्जनेय! मम देहि करावलम्बम् ॥1 ॥

इन्द्रादि सर्वविबुधप्रविकीर्त्यमान!
श्रीमत्प्रभावपरिभासुरदिव्यरूप ।
बालप्रभाकरमनोहररञ्जितास्य!
श्री आञ्जनेय! मम देहि करावलम्बम् ॥2 ॥

संसारचक्रनिरतभ्रमणे विलग्नं
वैराग्यदूरमद्यदूषितमस्वतंत्रम् ।
धृत्वानुरागघनशृंखलया पिनद्धं
श्री आञ्जनेय! मम देहि करावलम्बम् ॥3 ॥

संसारसागरसमुत्तरणानिभज्ञं
सम्मुह्यमान मतिभीतमहष्टयष्टिम् ।
मां तारयार्तमभयप्रददिव्यदृष्ट्या
श्री आञ्जनेय! मम देहि करावलम्बम् ॥4 ॥

संसारकाननपरिभ्रमणप्रयासै-
रश्रान्तपीडिततनोर्मदनार्दितस्य ।
स्वान्तर्निलीनघन शत्रुपरिग्रहस्य
श्री आञ्जनेय! मम देहि करावलम्बम् ॥5 ॥

चित्तस्य चंचलतया परिनष्टनिष्ठा-
दृष्टेरनेकविधलौकिकनित्यपीड़ा-
कृष्टेश्च, दुष्टमतिदैत्यसमाकुलस्य
श्री आञ्जनेय! मम देहिकरावलम्बम् ॥6 ॥

दुर्वारघोरबहुवाञ्छितजाललग्न
प्रारब्धपाशपरिबंधितजीवितस्य।
कामक्रुधमदभयादिपरीतवृत्तेः
श्री आञ्जनेय! मम देहि करावलम्बम् ॥7॥

दुष्टग्रहैः परिवृताखिलपुत्रपुत्री-
दारस्य रोगपरितप्तकुटुम्बकस्य।
दुष्टग्रहादि बहुरोगहरं दयालो!
श्री आञ्जनेय! मम देहि करावलम्बम् ॥8॥

मयाभिधानघनकुड्य विनिर्मितेऽस्मिन्
कारागृहे कठिनसंसृतिरूपघोरे।
बद्धं विलोकय, विमोचय मां हनूमन्!
श्री आञ्जनेय! मम देहि करावलम्बम् ॥9॥

बालार्ककोटि शतदीधिति दिव्यमूर्ते!
सीतावियोगपरिहारकरम्यकीर्ते!
श्रीरामदिव्यचरणाम्बुजमत्तभृंङ्ग!
श्री आञ्जनेय! मम देहि करावलम्बम् ॥10॥

दुर्वारदारुणविलोलविपत्तरङ्गै
र्दुष्पार अद्भुततरो भवसागरो मे।
नौकायिताभयविधायकरम्यहस्त!
श्री आञ्जनेय! मम देहि करावलम्बम् ॥11॥

संसारसागरविहारमहासहाय-
श्रीदिव्यनाम! परशौर्यनिराकरिष्णो!
कर्णप्रभाकलितकुण्डलकान्तिकान्त!
श्री आंञ्जनेय! मम देहि करावलम्बम् ॥12॥

गान्धर्वरम्यकलया कलिताल्पविद्या
प्रावीण्य, शब्दनवशास्त्रमहाविहारिन्!
हस्तप्रहारहतराक्षसमध्यचारिन्
श्री आञ्जनेय! मम देहि करावलम्बम् ॥13॥

सीताशिरोमणिसमर्पणहर्षिताङ्गं।
श्रीरामचन्द्रमनिशं मनसा स्मरन्तम्।
त्वामञ्जनासुतमघान्तकरं भजेऽहं
श्री आञ्जनेय! मम देहि करावलम्बम् ॥14॥

सीताकथाकथनरञ्जितरामचन्द्र
श्रीपादसेवनविलीननिजान्तरङ्ग!
सीताप्रशोकपरिहारकथातरङ्ग
श्री आञ्जनेय! मम देहि करावलम्बम् ॥15॥

भक्ताग्रगण्य! निजभक्तगणप्रसन्न
प्रध्यातृलोकविपदन्तकचक्रवर्तिन्।
निध्यायतः शरणयाचनयागतस्य
श्री आञ्जनेय! मम देहि करावलम्बम् ॥16॥

दुर्दैवयोगपरिनिष्टसमृद्धिकस्य
प्रारब्धभोगपरिशेषसमाकुलस्य।
दीनस्य दिव्यचरणे शरणागतस्य
श्री आञ्जनेय! मम देहि करावलम्बम् ॥17॥

श्रीरामचन्द्रचरितामृतपानगोष्ठी
संस्थान! बाष्पपरिपूर्णविनिर्मलास्य।
श्रीकेसरीप्रियकुमारक, वानरेश!
श्री आञ्जनेय! मम देहि करावलम्बम् ॥18॥

नित्यं त्वदीयचरणस्मरणप्रवृत्तं
नित्यत्वदर्पितसमस्तभविष्यदर्थम्।
मां नित्यसेवकमिमं कृपया विलोक्य
श्री आञ्जनेय! मम देहि करावलम्बम् ॥19॥

अक्षाद्यनेकदनुजप्रविनाशनेन
प्रद्योतमानघनशौर्यविराजमान।
लङ्काविनाशनविनोदितदिव्ययान
श्री आञ्जनेय! मम देहि करावलम्बम् ॥20॥

माता हनूमांश्च पिता हनूमान्
भ्राता हनूमांश्च सखा हनूमान्।
विद्या हनूमान् द्रविणं हनूमान्।
स्वामी हनूमान् सकलं हनूमान्।
श्री आञ्जनेय! मम देहि करावलम्बम् ॥21 ॥

श्रीरामलक्ष्मणकथाकथनप्रभूत
मुद्राप्रदानपरितोषितभूमिजात।
सुग्रीवमुख्यसचिवत्वविशेषपूत
श्री आञ्जनेय! मम देहि करावलम्बम् ॥22 ॥

श्रीजोश्युलान्वयसरोरूहधामसूर्य-
नारायणाख्य विदुषा रचितं स्तंक्यः।
भक्त्या पठेद्विगतकल्मष एव सद्यः
श्री आञ्जनेय! पदकंजमुपैति सोऽयम् ॥23 ॥

श्रीमन्महापवनसंभवसत्कृपाश्री
संप्राप्तिमात्महृदये परिवाञ्छयन्तम्
मां प्राप्नुयात् पवनसंभवसत्कृपाश्रीः
नित्यं तदीयभजने मतिरस्तु शान्ता ॥24 ॥

श्रीकाञ्चनाद्रिकमनीयशरीरशोभा-
रम्याय राघवपदाम्बुजसेवकाय।
भूतप्रचारबहुरोगनिवारकाय
श्री आञ्जनेय! गुरवे हृदये नमस्ते ॥25 ॥

---

# श्रीजगन्नाथप्रार्थना

हरेकृष्ण-मेहेरः

शुभं सुभद्रा-बलभद्र-सङ्गतं
नमामि नाथं जगतां वरेण्यम्।
ॐकार-रूपं भुवि दारु-दैवतं।
वेदान्त-वेद्यं महतां शरण्यम् ॥1॥

नतोऽस्मि विष्णुं हृदि राजमानं
नीलाद्रि-वासं करुणा-निधानम्।
वृन्दारकै - र्वन्दित - पाद - पुष्करं
ब्रह्म-स्वरूपं पुरुषोत्तमं परम् ॥2॥

लक्ष्मीपतिं शङ्ख-गदाब्ज-चक्रिणं
श्रीवासुदेवं दुरितापहारिणम्।
रथोत्सवे दर्शित-चारु-विग्रहं
भक्त्या तमीशं शिरसा नमाम्यहम् ॥3॥

प्रदेहि चित्ते विमलावकाशं
गतान्धकारं वितरप्रकाशम्।
कुरुष्व मे कल्मष-राशि-नाशं
हर प्रभो! संसृति-बन्ध-पाशम् ॥4॥

मैत्रीं प्रशान्तिं सुखदां चिरन्तनं
तनोतु विश्वे तव नाम-चिन्तनम्।
आत्मीयता-रूप-रसो महीयतां
प्रभो जगन्नाथ! कृपा विधीयताम् ॥5॥

# पदावलिः

## अनन्तराम मिश्रः 'अनन्त'

॥ 1 ॥

प्राच्यामरुणिमा सम्भाति।
परावर्त्य समुन्मिषन्तीमुषां रविरायाति।
गगनगङ्गायां श्रमार्तो शर्वरीशः स्नाति।
धर्मबालातरलकञ्चनकरैर्भुवं पुनाति।
सौरभं पौष्पं गृहीत्वा मलयवायुर्वाति।
नयननीडं साम्प्रतं न हि स्वप्नखगं दधाति।
जलजसम्पुटमुक्तमधुपव्रजो मधु गृह्णाति।
श्रीसमृद्धिं सुखं प्रातः प्राणिने प्रददाति।
प्राच्यामरुणिमा सम्भाति।

॥ 2 ॥

सुन्दरि! समागतोऽयं शिशिरः।
केकी भवति दुःखितः सम्प्रति नृत्यति नैव विमुदिरः।
तरणितरुणिताम्बूलतैलतूलप्रकरः सखि! रुचिरः।
रुद्धगवाक्षे गृहे प्रायशो जनोऽस्ति सेवितमदिरः।
कुहिरतुषारनिविडचक्रव्यूहेऽभिमन्युवन्मिहिरः।
प्रतीयते त्रस्तं परन्तु न विजयते कौरवतिमिरः।
सप्तसप्ततूलिकासमावृत अपि हि वेपते स्थविरः।
आम्रोपरि कोकिलाश्च भ्रमराः कमलोपरि नहि सगिरः।
सुन्दरि! समागतोऽयं शिशिरः।

॥ 3 ॥

चिरसौख्यं वर्षतु नववर्षम्।
श्यामश्वेतनिशादिवसाश्वैर्कृष्टं वितरद्धर्षम्।
कालरथोपरि समारुह्य प्रचुरं वितनोतूत्कर्षम्।
मोदमङ्गलस्वास्थ्यसमृद्धिं भुवने दर्शं दर्शम्।
सुमतिं गतिं ददातु भवद्भ्यो महज्जीवनादर्शम्।

त्रिविधतापसन्तप्तेभ्यो वितनोतु मलयस्पर्शम्।
जनहृदयान्निसार्य भयङ्करमुग्रवाददुर्धर्षम्-
रक्षत्वैक्यमखण्डत्वं राष्ट्रस्य हि वीतामर्षम्।
चिरसौख्यं वर्षतु नववर्षम्।

॥ 4 ॥

जयतु जयतु हे गङ्गे!
भोगवती पाताले भागीरथी भूतलोत्सङ्गे।
व्योमकेशवासिनि! मन्दाकिनि! दीव्यत्त्रित्वविभङ्गे!
भीष्मजननि! शान्तनुप्रियतमे! रम्ये! तरलतरङ्गे!
हंसहंसकस्वरितोपान्ते! प्रध्वनितोर्मिमृदङ्गे!
पापेन्दुरभक्षणप्रसङ्गे फुंकृतवीचिभुजङ्गे!
इतस्ततः पर्वतमातङ्गे! तटविनिविष्टाविहङ्गे!
त्वं सत्वरं प्रसीदतु मातर्जीनगतिप्लवङ्गे!
विष्णुपदामृतसुरापगे! जाह्नवि! समृद्धसत्सङ्गे!
सगरसुतोद्धारिके! सागरस्यार्धाङ्गिनि! शिवसङ्गे!
बाल्यमुत्तरे तारुण्यं च विहारे पुनरथबङ्गे।
शिवशिरः स्थशशिररिममालिके! ब्रह्मद्रवे! सदङ्गे!
सत्यं शिवं सुन्दरं यच्छतु भवभामिनि! भवभङ्गे!
जयतु जयतु हे गङ्गे!

## देवि शिप्रे! मुदं मङ्गलं दीयताम्

॥ 1 ॥

त्वत्समीपं तु गच्छन्ति ये मानवाः
स्नान्ति श्रद्धायुतं दुग्धवज्जीवने।
संयतिं सन्ततिं साधुसत्सङ्गतिं
सद्गतिं सन्मतिं प्राप्य हर्षन्ति ते॥

॥ 2 ॥

सौख्यसौभाग्यसौन्दर्यशोभामयी
शोभते कीर्तिशाला विशाला तटे।
तीर्थमाला शुभा पुण्यपुष्पान्विता।
राजते चोपकण्ठे त्वदीयेऽक्षते॥

॥ 3 ॥

भारतीया मनीषा बभूवोन्नता
प्रत्यभिज्ञा जनैर्दर्शनेनार्जिता।
त्वद्दुकूले सदा पोषिता सभ्यता
धर्मसम्मानिता संस्कृतिः पालिता ॥

॥ 4 ॥

श्रीमहाकालभालस्य चन्द्रोज्ज्वला
वारिधारा त्वदीयाऽमला सर्वदा।
मालवे भाति गङ्गेव श्रद्धास्पदा
या च 'सत्यं शिवं सुन्दरम्' कल्पते ॥

॥ 5 ॥

कामिनीक्लान्तिहारी त्वदीये तटे
वाटिकायां विहारी सुगन्धानिलः।
वाति मन्दं लतावल्लिकां चुम्बयन्
त्वत्तरङ्गै समन्ताद् तरङ्गीकृता ॥

॥ 6 ॥

क्लेशसंहारिके! हर्षशृंगारिके!
प्रीतिसञ्चारिके! दिव्यताधारिके!
पुण्यनीहारिके! हे जगत्तारिके!
स्वच्छताकारिके! त्वं सदा पाहि माम् ॥

॥ 7 ॥

आरतिः सङ्गते! प्रार्थनागुञ्जिते।
शम्भुसान्निध्यसौभाग्यसंवर्धिते!
विष्णुरक्तोद्भवे! यज्ञसद्गन्धिते!
देवि शिप्रे! मुदं मङ्गलं दीयताम् ॥

॥ 8 ॥

अत्रिदेहोद्गते! चारुचन्द्रस्वसे!
दीपदानप्रतुष्टे! सुधासम्भवे!

मोक्षदे! हे ज्वरघ्नि! प्रभामण्डिते!
देवि शिप्रे! समृद्धिं सुखं वर्धताम् ॥

॥ 9 ॥

भक्तसम्पालिके! कल्मबक्षालिके!
धर्मसञ्चालिके! बिन्ध्यजाबालिके!
क्रोधकामापहे! कामदे! मङ्गले!
दिव्यदिव्योदके! मोहतः त्राहि माम् ॥

॥ 10 ॥

सर्वदे! सर्वदा सर्वमाङ्गल्यदा
त्वं हि भूयात् स्वदेशे शुभोत्कर्षिणी।
खण्डितं स्यान्न किञ्चित् स्वराष्ट्रैकता
देवि शिप्रे! मदीयेयमस्त्यैषणा ॥

# सौन्दर्यरहस्यम्

रमाशङ्कर अवस्थी

मातस्त्वं नन्दनमधुमासा। द्योतितरसभृतकुसुमविकासा।
दिव्ये! त्वं चिन्मङ्गलहासा। सुरभितरञ्जितभावविलासा ॥1 ॥

मनो रञ्जयसि नवनवरङ्गैस्त्वमसि मसृणतालेखा।
चाकचक्यपूरिता गिरौ त्वं प्रभानिर्झरीरेखा।
रुषाकणैस्त्वमुषाट्टग्ज्वाला, क्षितिजविद्रुमैर्माला।
कुहू चन्द्रिका भवति, हससि चेद् दीप्यत्यम्बरशाला ॥2 ॥

त्वं टलमलाकरोषि, मानसे भाति नभोदृक्तारा।
त्वं झलमलाकरोषि, लासयसि भूत्वा ज्योतिर्धारा।
त्वं कलकलाकरोषि, वत्सले! जीवननदीतरङ्गे।
जलबिन्दवः पतन्ति, भाससे झलज्झलारसरङ्गे ॥3 ॥

रजतविभा त्वं, शुक्त्यः शक्तिर्दाहकतास्यनले त्वम्।
त्वमसि सौरभं, शक्तिः कुसुमे, जीवनमयी जले त्वम्।
तपने तपनस्त्वं, त्वं चन्द्रे प्रद्योतः प्रह्लादः।
त्वं रामे रामत्वं, शक्त्या भवमङ्गलप्रसादः ॥4 ॥

आत्मा रसस्तनुः शब्दार्थौ, त्वमसि शिवमयी शक्तिः।
सौन्दर्यानुभूतिसौरभिता त्वं सत्याभिव्यक्तिः।
भावमयी त्वं, ह्लादमयी त्वं, चिन्मङ्गलामला त्वम्।
शारदासि कवियशोदायिनी, त्वं कवितासि, कला त्वम् ॥5 ॥

त्वं बिम्बिता मुखोज्ज्वलतायां कुमुदैः स्मिता सरलता।
त्वं कुसुमेषु मसृणता, रूपे मौक्तिककान्तितरलता।
त्वं भूजातजीवनं, त्वमसि च सर्वधर्मरससारा।
त्वमस्यनन्तशान्तिविस्तारा, गङ्गाशुचिताधारा ॥6 ॥

त्वमसि सिन्धुगाम्भीर्यातलता, त्वं विधुवदनोज्ज्वलता।
विटपच्छायायाः शीतलता, ज्योत्स्नायाः निर्मलता।
त्वं गिरिधैर्यं, धरणीस्थैर्यं, हरिज्जीवनं शस्यम्।
रवितेजोऽसि, सुमनसो हासस्त्वं सौन्दर्यरहस्यम् ॥7 ॥

---

# कथं तेषु मैत्री

रमेशकुमारपाण्डेयः

न पाका नृपाश्चैव विश्वासयोग्या
न वा सख्ययोग्या न वा सौख्ययोग्याः।
स्वतो लुण्ठका वञ्चका प्रेतजात्या
परेषां सदा पीडनाय प्रवृत्ताः ॥1॥

विना स्वार्थवृत्तिं न कार्ये प्रवृत्तिः
जनानां च तेषां सदा जातिनीतिः।
न माता पिता नैव बन्धुस्सखा वा
न तेषां भवेत् कोऽपि कुत्रापि भूमौ ॥2॥

न बन्धुर्न वा बन्धुभूमिश्च तेषां
सदा रक्तपाते प्रलिप्ताश्च तेऽत्र।
न ते मानवा मानवीया न नीतिः
कथं तेषु मैत्री भवेद्वाथ प्रीतिः ॥3॥

जना येऽत्र शक्ताः सुशीलाः स्वधर्मे
सदा संरता देशसंवर्धने वा।
स्वकार्ये सुलग्ना विना भेदबुद्धिं
प्रजानां च सेवाविधौ तत्पराश्च ॥4॥

इमां संस्कृतिं रक्षितुं ये च लग्नाः
सुशिक्षापराः शान्तिसद्भावयुक्ताः।
त एवात्र भस्मीकृता गोलिकाभिः
प्रमत्तैश्च संप्रेषितैः पाकदुष्टैः ॥5॥

धरा कम्पिता कम्पिताः पर्वताश्च
न तेषां मनः कम्पितं पामराणाम्।
इमां देवभूमिं समाक्रम्य दैत्याः
निजां दैत्यभूमिं विधातुं प्रलिप्ताः ॥6॥

न विश्वासयोग्याश्च जीवान्तकास्ते
सदा दुर्विपाकाश्च ते दुष्टपाकाः।
दया नास्ति तेषां न धैर्यं न शौर्यं
जनान् घातयन्ति प्रमत्ताः सभृत्यान् ॥7 ॥

ने तेष्वस्ति धर्मः सुहृद्भावगम्यः
सदा भारते द्रोहवह्निं क्षिपन्तः।
कथं प्रेमभूमौ पुनश्चागरायां
समागम्य धात्री च संदूषितास्तैः ॥8 ॥

न वार्ता न वृत्तं न चित्तं चरित्रं
सदा दुष्टमन्त्रो भवत्येव तेषाम्।
वयं भारतीयाः सदा जागरूकाः
नयाद्वा बलाद्वा च तान् बोधयामः ॥9 ॥

न मे मन्त्रभेदे न मे वर्गभेदो
न मे कर्मभेदो न मे शक्तिभेदः।
वयं सर्वथा शक्तिमन्तश्च तेषां
विनाशाय युद्धे प्रबुद्धे कदापि ॥10 ॥

---

# तिलकः राष्ट्रनायकः

शिवकुमारमिश्रः

अखण्डभारतस्यास्य तिलकः राष्ट्रनायकः।
प्रशस्यप्रतिभः ख्यातः स्मरणार्होऽस्ति सर्वदा ॥1॥

प्रतिष्ठिते कुले जातः महाराष्ट्रस्य सर्वथा।
रसबाणाष्टचन्द्राब्दे बालगङ्गाधरः किल ॥2॥

लोकमान्यो महाभागः वेदवेदान्तचिन्तकः।
भारतस्य समुद्धर्ता सदा विजयतेतराम् ॥3॥

संस्कृतस्य समृद्ध्यर्थं ऋग्वेदतिथिचिन्तकः।
ज्ञातासीदाङ्गलभाषायाः मराठ्या अपि सर्वथा ॥4॥

ओरायनाभिधो ग्रन्थः लिखितस्तिलकेन वै।
यस्मिंश्च विहितस्तेन ऋग्वेदतिथिचिन्तनम् ॥5॥

तस्य गणनया स्पष्टं ऋग्वेदरचना किल।
षट्सहस्रसमाः पूर्वं संजाता नात्र संशयः ॥6॥

विदुषा लोकमान्येन सर्वतोमुखबुद्धिना।
मराठाकेसरी संज्ञे पत्रिके द्वे प्रकाशिते ॥7॥

प्रकाशनमिदं ख्यातं तत्काले च निरन्तरम्।
भारतस्य स्वराज्यार्थं प्रेरकं देशवासिनाम् ॥8॥

राष्ट्रियभावना तस्य सर्वथा सुप्रशंसिता।
संकल्पो विहितस्तेन अधिगन्तुं स्वतन्त्रताम् ॥9॥

निर्माता भारतस्यासीत् उद्घोषितं च तेन वै।
जन्मसिद्धोऽधिकारोऽस्ति अस्माकं हि स्वतन्त्रता ॥10॥

राष्ट्रियपर्वरूपेण तेनैवायोजितः किल।
गुणाङ्कनागचन्द्राब्दे गणपतिमहोत्सवः ॥11॥

गोहत्याया निरोधाय तेन संघटिता तदा।
समितयः प्रयत्नेन वाञ्छिताः राष्ट्रवादिभिः ॥12॥

शराङ्कनागचन्द्राब्दे तिलकेन विशेषतः।
आयोजितः समारोहः सम्बद्धः शिवराजतः ॥13॥

आयोजितः समारोहः सर्वथैव विलक्षणः।
प्रेरकस्तिलकेनैव सार्वजनिक उत्सवे ॥14॥

सभेयं राष्ट्रभक्तानां सर्वथा राजनीतिकी।
आयोजिता च राष्ट्रेऽस्मिन् मुक्तये आङ्गलशासनात् ॥15॥

अस्मिन्काले महाराष्ट्रे दुर्भिक्षिणातिपीडितम्।
पीडितानां च साहाय्यं कर्तुं स तत्परोऽभवत् ॥16॥

प्लेगरोगसमाक्रान्तं महाराष्ट्रं यदाऽभवत्।
तत्रापि विहितं नूनं साहाय्यं तिलकेन वै ॥17॥

शैलाङ्गनागचन्द्राब्दे राजद्रोहापराधतः।
कारागारेऽत्र संस्थातुं तिलको विवशीकृतः ॥18॥

प्रवेशितोऽपि वीरः सः कारागारे मुहुर्मुहुः।
स्वाधीनभारतस्यार्थं संघर्षं न परित्यजत् ॥19॥

विपिनचन्द्रपालेन गोखलेनायकेन च।
सहैव चिन्तनं कृत्वा व्यापकत्वं चकार सः ॥20॥

कल्याणार्थं च देशस्य गम्भीरं सर्वथा स्मृतम्।
कृतमान्दोलनं तेन उग्रवादसमन्वितम् ॥21॥

शैलनभोऽङ्कचन्द्राब्दे सूरतस्याधिवेशने।
विभक्ते सति कांग्रेसे कांग्रेसाच्च बहिर्गतः ॥22॥

नागनभोऽङ्कचन्द्राब्दे राजद्रोहापराधतः।
मॉण्डले संज्ञके स्थाने षड्वर्षावधि प्रेषितः ॥23॥

पाण्डित्येन विशिष्टौ ग्रन्थौ लिखितौ च तेन अत्रैव।
'गीतारहस्यं' तथा 'आर्कटिक होम ऑफ द वेदाज' ॥24॥

आदर्शनायको वीरः मनीषी चिन्तको महान्।
नभोनेत्राङ्कचन्द्राब्दे राष्ट्रपूतो दिवंगतः ॥25॥

स्वतन्त्रभारतस्यास्य निर्माता पण्डितो महान्।
बालगङ्गाधरो नूनं राष्ट्रस्य प्रेरको भवेत् ॥26॥

एतादृशो महाभागः भारते भातु सर्वदा।
स्वातन्त्र्यस्वर्णिमे वर्षे तिलकः राष्ट्रनायकः ॥27॥

---

# आतङ्कवादः

## हरिश्चन्द्ररेणापुरकरः

प्रारम्भे सहसैकविंशशतके सप्टेम्बरैकादशे
सर्वश्रेष्ठतमा महाबलवती लोकेऽद्वितीयाऽपि सा।
अम्रीकासमसार्वलौकिकमहा सत्ताऽपि लक्ष्यं ह्यभू-
च्चित्रं! वैश्विकघोरमुस्लिममहोग्रातङ्कवादद्विषः ॥1 ॥

आन्ताराष्ट्रियघोरमुस्लिममहोग्रातङ्कवादाधिप-
स्योसामा-बिन-लादिनस्य विकरालातङ्कवादासुर-
स्याम्रीकाऽपि महत्तमाऽप्रतिहता सत्ताऽद्वितीया भुवि
घोरं लक्ष्यमभूदितीय सहसा श्रुत्वा जगद्विस्मितम् ॥2 ॥

अम्रीकाऽद्भुतऋद्धिशक्तिविभवैः स्वर्गातिरिक्तैर्ध्रुवं
स्वर्गस्थानपि सर्वसौख्यभरिताँल्लज्जापयन्तः सुरान्।
प्रासादा बहुभूमिकाश्च विपुला नूनं नभश्चुम्बिनः
शत्रोरेव विमानशस्त्रविकटैः सङ्घट्य भूसात्कृताः ॥3 ॥

न्यूयार्कस्थितभव्यविश्वविदितं वणिज्यकेन्द्रं महद्
विश्वोत्तुङ्गतमं दशाधिकशतं यस्याभवन् भूमिकाः।
अम्रीकीयविमानमेव तरसा सङ्घट्य तस्मिन् बलात्
क्रूरैरात्मविनाशिघोरकितवैः सम्पातितं श्येनवत् ॥4 ॥

यस्याभेद्यदुरासदा समभवद् रक्षाव्यवस्था भुवि
नीरन्ध्रा च नितान्तदोषरहिता यस्यास्ति चारस्थितिः।
यत्रागन्तुमपारयन्नमशकोऽप्याज्ञां विनाऽऽरक्षिणां
तत्पेण्टॅगननामरक्षणगृहं सम्पूर्णमुत्पाटितम् ॥5 ॥

लोके योऽप्रतिमाद्वितीयमहनीया शक्तिरेवाभवद्
यस्मिन् कोऽपि न वक्रदृष्टिपतनं कर्तुं समर्थो भुवि।
यः स्वं जागतशान्तिरक्षणकृते मेने क्षमं सर्वथा
हा हा! हन्त! न सोऽपि कर्तुमशकत् स्वस्यापि रक्षां मनाक् ॥6 ॥

यस्यात्यद्भुतसैन्यशक्तिरभवल्लोके प्रचण्डाऽतुला
वित्तीयाऽपि यदीयसंस्थितिरभून्नूनं दृढा निश्चला।
एवं सत्यपि मानबिन्दुरिव ते वाणिज्यसेनालयाः
उध्वस्ताश्च महोग्रवादिकितवैराश्चर्यमेवास्ति तत् ॥7॥

उच्छिन्नानि च मानगौरवयशांस्यप्याम्रिकाया ध्रुवं
शैथिल्यं प्रकटीबभूव नियतं रक्षाप्रणाल्या अपि।
सर्वश्रेष्ठविशालशक्तिरपि नो मुक्तोग्रवादादिति
सिद्धं नूनमभूत् करालविकटैरातङ्कवादाक्रमैः ॥8॥

कौशल्यं परमं महोग्रकितवानामाविरत्राभवत्
भित्वा गूढतमाममेद्यविकटां रक्षाव्यवस्थां शठैः।
सम्प्राप्यैव ततः प्रवेशमपि तैर्गुप्तं विमानेषु च
तान् सङ्घट्ट्य च विशालतुङ्गभवनै र्ध्वस्तानि पत्रोकवन् ॥9॥

तस्मिंस्तुङ्गतमे विशालभवने वाणिज्यकेन्द्राभिधे
नूनं कार्यरतास्तदा समभवंस्तत्रार्धलक्षं जनाः।
नष्टास्तेषु भवेयुरेव नियतं भूयःसहस्रं जना
इत्थं घोरविनाश एव समभूत्तत्राम्रिकायाः खलु ॥10॥

एतत्क्रूरतमोग्रदारुणतमं कृत्यं महाभीषणं
निर्वीर्यं खलु भीरुकातरतमं विश्वासघातात्मकम्।
निष्पापाश्च सहस्रशोऽनघजना यस्मिन् हता निष्ठुरं
घोरं निन्द्यतमं बभूव सुतरां मानुष्यतादूषणम् ॥11॥

आन्ताराष्ट्रियघोरमुस्लिममहोग्रातङ्कवादस्य वै
लक्ष्यं भारतवर्षराष्ट्रमभवत् त्रिंशत्समापूर्वतः।
पाकप्रेषितभीषणोग्रकितवैः पञ्जाबकश्मीरयो-
र्निष्पापाः शुचिशुद्धदोषरहिता लक्ष्यार्धलोकाहताः ॥12॥

अम्रीकाऽपि निवेदिता बहुतिथं पाकोग्रवादं प्रति
वारंवारमिहार्थिता समभवद्, ह्यस्मन्महामन्त्रिभिः।
पाकं वारयितुं स्वमित्रपरमं घोरोग्रवादात्खलु
तस्या नेतृवरैस्तु तस्य सततं घोरानवेक्षा कृता ॥13॥

आन्ताराष्ट्रियघोरमुस्लिममहोग्रातङ्कवादासुर-
स्याम्रीकाऽपि यदा बभूव विकटं लक्ष्यं महाभीषणम्।
उत्तुङ्गार्थिकसैन्यशक्तिगमकाद् हर्म्यद्वयध्वंसनाद्
विज्ञातं च तदोग्रवादविपदो दुःखं तया दारुणम् ॥14॥

स्फोटाः पूर्वमपीह लादिनजनैर्वाणिज्यकेन्द्रे कृताः
केन्या टांझनियादिदूतभवने स्फोटैर्हता भूरिशः।
एतस्याक्रमपूर्वसूचनमभूत्तैर्दत्तमित्युच्यते
शक्त्याध्माततमाम्रिका तु समभून्नो सावधाना मनाक् ॥15॥

एतेनोग्रतमाक्रमेण सहसा स्तब्धं च भीत्याहत-
मम्रीका महनीयराष्ट्रमभवल्लोके महाशक्तिमत्।
अध्यक्षस्य विशालभव्यभवनं भीत्यैव रिक्तीकृतं
किंकर्तव्यविमूढराष्ट्रमभवद् घोरोग्रवादाक्रमात् ॥16॥

अप्रत्याशितघोरभीषणतमाघाताच्छनैरुत्थितं
शक्त्या तं प्रतिकर्तुकाममभवद्राष्ट्रं महाऽमेरिका।
राष्ट्राध्यक्षमहोदयेन विकटं युद्धं च तद्वर्णितं
दुष्टाणां च कठोरशासनमसौ राष्ट्रं समाश्वासयत् ॥17॥

अम्रीकामिसलामशत्रुपरमं संभावयँल्लादिनो
ह्यस्या घोरविनाशकारिघटनाया हेतुरासीदिति।
अम्रीकाधिपतेर्दृढं मतमभूदित्येव तस्याश्रय-
र तालीबानगणाधिपस्तु सहसा तस्यार्पणायार्थितः ॥18॥

लादेनस्य च तालिबानमुखरैः सद्यो निरस्तेऽर्पणं
तालीबानविरुद्धघोरसमरो ह्युद्घोषितः श्रीबुशैः।
इस्लामस्य कलङ्कमेव नियतं मत्वाऽनघानां वधं
नैकैस्तद्धि समर्थितं दृढतरं मुस्लीमराष्ट्रैरपि ॥19॥

दीर्घं घोरतमोग्रवादविपदा सम्पीडितैर्भारतै-
रस्मिन् घोररणे स्वसंमतिरपि स्वाभाविकं घोषिता।
तालीबान्सुहृत्समर्थकवरः पाकोऽपि तत्प्रेरको
ह्यम्रीकाक्रमणं समर्थयतिचेदाश्चर्यमेवास्ति तत् ॥20॥

पाकस्यार्थिकदुर्दशा सहितमेवालोक्य नैजस्थितिं
पाकाध्यक्षमुशर्रफैरनुमतं ह्यम्रीकिघोराक्रमम्।
तालीबानसमर्थकान् भरतभूविद्वेषसंवर्धितान्
पाकिस्तानजहादिमुस्लिमजनान् युक्त्या प्रबोध्यैव तान् ॥21॥

तालीबानसुहृत्समर्थकवरश्चोत्प्रेरकः पोषकः
पाको नूनमभूदिति त्रिभुवनं जानाति सम्यक्तया।
शत्रुत्वं खलु तालिबानसहितं पाको न कुर्याच्चिरं
स्वार्थापूर्तिकृते च तस्य रिपुता नूनं क्षणस्थायिनी ॥22॥

ओसामा-बिन-लादिनोऽपि सुतरामम्नीकिसृष्टिर्ध्रुवं
रूसस्य प्रभुतां विहन्तुमफगानिस्तानदेशाद् बलात्।
तालीबानसमर्थनाय बिनलादेनोऽपि संधारितः
ओसामासहयोगमाप्य रशियादेशोऽपि मोघीकृतः ॥23॥

ओसामाबिनलादिनेति बिकटो घोरोग्रवादाग्रणी-
रम्रीकाविषयेण नूनमभवत् संवर्धितः पोषितः।
तद्भस्मासुरसन्निभः स्वजनकस्यैवास्ति घातोद्यतो
दुष्टाणां सहयोग एव न भवेच्छ्रेयस्करः कर्हिचित् ॥24॥

पाकिस्तानमहोग्रवादविषये संसूचिता नैकशो
ह्यम्रीका न चकार किंचन बिना संवेदनां शाब्दिकीम्।
कश्मीरे निहता महोग्रकितवैस्त्रिंशत्सहस्रं जनाः
पाको घोरतमोग्रवादिविषयत्वेनापि नो घोषितः ॥25॥

पाके प्रत्युत भीषणास्त्रनिचयो ह्यम्रीकया वर्षित-
स्तेनैतत्सकलं प्रयुक्तमभवद् ह्यस्मद्विरुद्धं सदा।
पाके घोरतमोग्रवादशिबिराण्यायोज्य तैर्भूरिशो
निष्पापाश्च सहस्रशो विशसिताः पञ्जाबकश्मीरयोः ॥26॥

अम्रीका परदुःखशीतल इव स्वस्था ह्यभूत्सर्वथा
ह्येषा स्वार्थपरायणा च सुतरां नीतिर्न योग्या खलु।
तद्राष्ट्रस्य कृते विशिष्य जगतो यो नायकः केवल-
स्त्रैलोक्ये शमशान्तिरक्षणकृते बद्धादरः कथ्यते ॥27॥

लोके मानवतासुसंस्कृतिसदाचारादिसंहारकं
त्रैलोक्याज्जनतन्त्रनाशकमभूदातङ्कवादासुरः।
तस्य क्रूरतमोग्रवादनुजस्योच्छेदयुद्धे समै-
रेकीभूय विधेय एव समरो घोरोग्रवादान्तकृत् ॥28॥

लादेनस्य विरुद्धमेव नहि तद् युद्धं भवेत्केवलं
लोके व्याप्तमहोग्रवादविपदः सेर्वङ्कषं तद्भवेद्।
इत्यध्यक्षमहोदयेन घुषितं कश्मीरमुल्लिख्य वै
इत्थं तेन निजाक्रमाद् भरतभूपीडानुभूतिः कृता ॥29॥

अस्माकं सहयोगिनश्च समरे देशा भवेयुर्न ये
ते सर्वेऽपि महातिरेकिसुहृदो मंस्यन्त एवाद्य वै।
घोरामित्रवदेव तेऽपि समरे लक्ष्यं भवेयुर्ध्रुव-
मित्थं तेन विघोषितं बुशमहाभागेन नूनं दृढम् ॥30॥

अस्या जागतिकोग्रवादविपदो नाशाय संपूर्णतः
प्रस्तावोऽपि च राष्ट्रसंघसदसो रक्षासमित्या कृतः।
यत्साह्यं प्रश्रयोऽपि घोरकृतये देयो न राष्ट्रैरिति
नोचेत्तेऽपि भवेयुरेव नियतं दण्डाईदोषास्पदाः ॥31॥

कोऽयं घोरतमोग्रवादविषयः स्वातन्त्र्ययुद्धं च कि-
मित्येतत् परिभाषितं न सभया तस्माद् भ्रमः स्यात्तयोः।
कश्मीरीयमहोग्रवादमपि ते ध्यायन्ति मुक्ते रणं
लादेनोऽप्यफगानयुद्धसमये स्वातन्त्र्ययोधो ह्यभूत् ॥32॥

कोऽयं लादेनः

आन्ताराष्ट्रियघोरमुस्लिममहोग्रातङ्कवादाग्रणी-
रोसामाबिनलादेनोऽस्ति सवुदीदेशाप्तजन्मा खलु।
सर्वोच्चामभियांत्रिकीं स पदवीं सम्प्राप्य जेद्दापुरे
पित्रासार्धमसौ चकार गृहनिर्माणस्य कार्यं चिरम् ॥33॥

तस्मिन् प्राप्य कुबेरकल्पविभवं जताश्च खर्वाधिपः
इस्लामस्य भुवि प्रसारकरणे बद्धादरो लादिनः।
क्रीत्वा प्रात्र्यधनेन घोरकितवाज तत्कर्तुमारब्धवान्
मुस्लीमेतरधर्मजाति सुजनाः क्रूरं हता भूरिशः ॥34॥

सौदीराष्ट्रममेरिकीयपृतनां देशे ददात्याश्रयं
काफीरांश्च पवित्रमुस्लिभुवि स्थानं ददातीति च।
त्यक्तस्तेन सदैव सौदिविषयः पाकं च यातस्तत-
स्तत्यश्चादफगानदेशमगमत् तत्रैव वस्तुं चिरम् ॥35 ॥

आक्रान्ते सति चाफगानविषये रूसीयसेनाबलै-
लदिनोऽप्यफगानपाकमुखरैः साह्यार्थमाकारितः।
अम्रीकाऽपि तदीय साह्यमधिक प्राशंसदेवाहवे
अन्ते पूर्णपरास्तमेव समभूद् रूसाधिराज्यं ह्यपि ॥36 ॥

ईराकोपरि भीषणाक्रमवशादिस्नेलसम्पोषणा-
दम्रीकामिसलामशत्रुपरमं मेने तथा भारतम्।
अग्रे नूनममेरिकाभरतभूदेशौ स्वलक्ष्यं कृतौ
केन्यातांजनियादिदूतभवनान्याक्रम्य नैके हता ॥37 ॥

अम्रीकासमयेव भारतमसौ घोरारिमाघोषयत्
कश्मीरीयमहोग्रवादिसमरे तस्याभवद् भूमिका।
कश्मीरीयमुजाहिदीनाकितवान् तेनापि साह्यं कृतं
पाकिस्तानसमं तदीयसहयोगोऽप्यस्ति हत्याक्रमे ॥38 ॥

तेनासीदलक्कायदाभिधमहासंघोऽपि संस्थापितो
लोके घोरजहादिमुस्लिममहोग्रातङ्कवादेप्सितम्।
स्पष्टीकर्तुमकारि तेन विशदं तत्संविधानं ह्यपि
तस्यैकः खलु विश्वकोष इवैतेनाभवन्निर्मितः ॥39 ॥

आन्ताराष्ट्रियनैकमुस्लिमजहाघातङ्किसंघा अपि
तेनासन्नलकायदाभिधदले कार्यार्थमेकीकृताः।
शाखाः कार्यरता भवन्ति भुवने तस्याद्य सर्वङ्कषा
ओसामावचसाऽऽत्मघातिकितवाः सभ्या भवन्त्यस्य वै ॥40 ॥

लोके मुस्लिमधर्म एव भवति श्रेष्ठः परं पावन-
स्त्रैलोक्येऽपि कुराणमेव सुतरां देवेशवाणी परा।
लोके प्रेषितम्होमदोऽस्ति नियतं लोकेशदूतो महान्
येभ्यस्तत् त्रितयं न मान्यमिह ते वध्या जनाः काफिराः ॥41 ॥

इस्लामस्य भुवि प्रसारकरणे प्राणार्पणं कुर्वतां
स्वर्गे स्थानमतीवशान्तिसुखदं चाल्लासमीपे ध्रुवम्।
शिक्षैषा खलु दीयते च सततं शाला प्रशालासु च
तस्मादेव महात्मघाति सुभटाः सिद्धा भवन्ति खलु ॥42 ॥

मुल्लावोमस्तालिबानमुखरैस्तस्याफगाने ने स्थितौ
प्राक्कालीनविशालसंस्कृतिमहामान्य प्रतीका इव।
बुद्धस्य प्रतिमाः शिलोच्चयमया उच्चैस्तमा भूतले
सर्वैस्तत्प्रतिषेधितेऽपि बहुशो ध्वस्तीकृताः दुर्जनैः ॥43 ॥

लादेनस्य करालयोजनमदः कर्तुं च कार्यान्वितं
नूनं विंशतिघोरमुस्लिममहोग्रातङ्किजाल्मैर्ध्रुवम्।
अम्रीकाविषये समुष्य सुचिरं कृत्वा च वेषान्तरं
प्राप्ताऽभूच्च विमानचालनसुशिक्षाय्यम्रीकायां शठैः ॥44 ॥

अन्ते घोरतमातिरेकिकितवैः सप्टेम्बरैकादशे
प्रातः प्राप्य रहः प्रवेशमपि तै यात्राविमानेषु च।
तेषामेव ततो विधाय हरणं संघट्य तानेव च
व्योमस्पर्शिविशालतुङ्गभवनैर्भूसात्कृतानि क्षणात् ॥45 ॥

### कश्मीरविधानसभाभवनोपर्याक्रमणम्

तालीबानसमर्थनाय बहुशो याता महातङ्किन
इत्यालोच्य विभागरक्षकगणे शैथिल्यमाप्ते सति।
कश्मीरीयविधानसौधभवनं ह्याक्रान्तमातङ्किभि
विस्फोटाकुलकारमेव बलवत् संघट्य तस्याग्रतः ॥46 ॥

जैशेम्होमदनामकोग्रदलमुख्येनास्य पृष्टव्यता
घोरोग्रेण मसूदनामकितवेनैवास्ति संस्वीकृता।
लोके घोरतमोग्रवादशमने पाकोऽस्ति चेदुत्सुकः
प्रत्यर्प्यः खलु तेन भारतभुवे जाल्मो मसूदो ध्रुवम् ॥47 ॥

चत्वारिंशदपापनिर्मलजनास्तस्मिन् हता निष्ठुरै-
र्भाग्यान्मन्त्रिगणा विधायकजना याताद्यभूवन् गृहम्।
नोचेद् घोरविनाश एव नियतं जातोऽभविष्यत् खलु
राष्ट्रीये जनतन्त्र एव समभूद् घोरोग्रवादाक्रमः ॥48 ॥

एतेनापि महाक्रमेण सुतरां विज्ञापिता श्रीबुशाः
यत्तस्यापि महोग्रभीषणदले कर्तुं समावेशनम्।
विज्ञप्तः प्रतिबन्धितुं दलमिदं ह्यस्मन्महामन्त्रिभिः
पश्चादेव विचारयेत् तदिति तैस्तद् वर्जितं तत्क्षणम् ॥49 ॥

आन्ताराष्ट्रियघोरमुस्लिममहोग्रातङ्कवादाग्रणीः
पाको येन हताश्च कश्मिरभुवि त्रिंशत्सहस्रं जनाः।
घोरातङ्कविरुद्धभीषणरणे चित्रं! सहायो भवेद्
भुक्त्वैवाखुशतं प्रयाति हजयात्रां सा बिडाली ध्रुवम् ॥50 ॥

आन्ताराष्ट्रियघोरमुस्लिममहोग्रातङ्कवादाह
पाकं घोरतमोग्रवादिविषयं सार्धं गृहीत्वा कथम्।
आङ्ग्लामेरिकनादिराष्ट्रपरमैर्जेतुं च शक्यं भवेद्
युद्धं तन्न महोग्रवादशमनं स्याद् वैरशोधात्मकम् ॥51 ॥

युद्धं लादिनतालिबानविपरीतं केवलं तद्भवेत्
पश्चादेव तदीयवृद्धिविषये चिन्ता विधीयेत वै।
इत्थं चाङ्ग्लमहाप्रधानसचिवैर्दिल्ल्यां समुद्घोषितं
कश्मीरीयमहोग्रवादविषये पृष्टैश्च मौनं स्थितम् ॥52 ॥

तालीबानविरुद्धपाकसहयोगं प्राप्तुमम्रीकया
पाकः पूर्वऋणात्प्रचण्डविपुलान्मुक्तः कृतः पूर्णतः।
अग्रेऽपि प्रचुरं प्रतिश्रुतमभूत् साह्यं च नानाविधं
कश्मीरीयमहोग्रवादविषये संविद् कृता स्याद् रहः ॥43 ॥

विश्वं शस्त्रबलेन मुस्लिममयं कर्तुं च बद्धस्पृह-
मान्ताराष्ट्रियघोरमुस्लिममहोग्रातङ्कवादं भुवि।
आयोद्धुं जनतन्त्रमेव भुवने संरक्षितुं सर्वथा
ह्येकीभूय समस्तराष्ट्रपरमैः कार्यः प्रयत्नो महान् ॥54 ॥

चेचन्याख्यविशिष्य मुस्लिमये रूसप्रदेशेऽपि च
तत्रस्थैर्विकटोग्रवादिकितवैः पाकाफगानैः समम्।
हत्योत्पातपरायणैश्च विकरालातङ्कवादेप्सितै-
र्विध्वंसं सकलेऽपि रूसविषये कर्तुं समारभ्यते ॥55 ॥

धर्मोन्मादकृतोग्रवादविकटान् दृष्ट्वा जगन्मुस्लिमान्
रूसोत्सर्जनमुक्तमुस्लिममयान् देशांश्च दृष्ट्वा बहून्।
सिंकीयांगमपीह मुस्लिममयं दृष्ट्वा प्रदेशं तथा
संभाव्याद् विकरालभीषणभयाच्चीनोऽप्यातङ्कितः ॥56 ॥

आन्ताराष्ट्रियघोरमुस्लिममहोग्रातङ्कवादस्य वै
पाकिस्तानमथाफगानविषयः केन्द्रं हि जातौ महत्।
यत्रोस्माँबिनलादिनेति कथितो घोरोग्रवादाग्रणीः
स्थित्वा प्रेरयति स्म दारुणतमं भीमोग्रवादं भुवि ॥57 ॥

पाकिस्तानमतीवकैतवमयं कापट्यदम्भान्वितं
मिथ्यावादिनितान्तनीतिरहितं राष्ट्रं महावञ्चकम्।
मायामोहकरालकूटकपटं यस्यास्ति नीतिः सदा।
विश्वासार्हमेव नहि तद् विश्रम्भघाति सदा ॥58 ॥

पाकिस्ताननृशंसशासकजनैस्त्रिंशत्समाः सन्ततं
प्रेष्यावैधकरालघातुकजनान् घोरास्रदास्त्रैर्युतान्।
निष्पापाश्च सहस्रशोऽनघजना दुष्टैर्हता भारते
पाको घोरतमोग्रवादिविषयत्वेनाद्य घोष्यः खलु ॥59 ॥

आङ्ग्लामेरिकनादिराष्ट्रपरमैः स्वार्थान्धसेर्षैर्भुवि
माभूद्भारतमत्र शक्तिरतुला तेषां प्रतिस्पर्धिनी।
रूद्धोत्कर्षविकाससिद्धिरिह यो युद्धे रतत्वाद्भवे-
दित्यर्थं प्रचुरास्त्रशस्त्रविभवः पाके भृशं वर्षितः ॥60 ॥

तस्यैवास्ति करालघोरविकटा निष्पत्तिरेषाऽधुना
यच्छस्त्रास्त्रविशालवित्तविभवं निःशङ्कमेवात्र तैः।
तेषामेव विरुद्धमद्य सकलं नूनं प्रयुक्तं शठैः
दिष्ट्या तस्य चिरात्प्रतीतिरपि तान् जातेति नाल्पं खलु ॥61 ॥

त्रैलोक्याज्जनतन्त्रनाशनपरस्वातन्त्र्यसंहारकृत्-
तत्तीव्रोग्रकरालघोरविपदो मुक्तं विधातुं जगत्।
सम्मिल्यैव समस्तराष्ट्रपरमैर्यत्नो विधेयो महान्
स्वातन्त्र्यं मनुजस्य पूतमिह तन्नो चेद् विनश्येद् ध्रुवम् ॥62 ॥

## तालीबानविरुद्धयुद्धारम्भः

लोके संस्कृतिसभ्यता-मनुजता-स्वाधीनतानाशकृ-
देतद्घोरतमोग्रवाददनुजस्योत्पाटनायोधनम्।
सम्बोध्याखिलविश्वराष्ट्रपरमानकटोबरे सप्तमे
प्रारब्धं किल सप्तविंशदिवसे घोराक्रमादुत्तरम् ॥63॥

अग्न्यस्त्रैर्युतवायुयानततिभिः काबूलकन्धारयो-
र्घोरोग्राक्रमणं विधाय सहसा ध्वस्ताश्च सेनालयाः।
ओसामा-बिन-लादिनस्य शिबिराण्युत्पाटितान्याभवन्
उध्वस्तानि च तालिबानपृतनाकेन्द्राणि संपूर्णतः ॥64॥

अस्या विश्वविपद्विरुद्धसमरे प्रायः समस्तैरपि
राष्ट्रैः पूर्णसमर्थनं प्रकटितं साह्यं समाश्वासितम्।
आङ्गलैः सामरिकः समस्तसहयोगोऽप्यद्य संदीयते
नैकैर्नैतिक संमतिः समुदिता घोरोग्रयुद्धं प्रति ॥65॥

आङ्ग्लामेरिकिवायुयाननिकरैरग्न्यस्त्रसंवर्षकै-
स्तालीबानविमानपत्तनपदान्युत्पाटितानि ध्रुवम्।
काबूलं ह्यपि राजधानिनगरं ह्यग्न्यस्त्रसंताडितं
रात्रावेव कृताक्रमाद् विशसिता नैके जना नागराः ॥66॥

युद्धं नास्ति कदापि मुस्लिमविरुद्धं नाफगानस्य वा
लादेनस्य विरुद्धमेव भवति क्रूरोग्रघोरस्य वै।
तस्यैवाश्रयतालिबानमपि तल्लक्ष्यं भवेन्निश्चित-
मित्युद्घुष्टममेरिकाधिपतिभिः श्रीमद्बुशैर्भूरिशः ॥67॥

भूम्यन्तो गिरिकन्दरेषु निभृताः स्युर्मायिनः कर्हिचि-
दित्याशङ्क्य शिलाप्रभेदिविकरालास्त्राणि मुक्तानि तैः।
विस्फोटैः प्रचुरैर्बभूव सहसा सर्वं हि धूमावृतं
विद्युद्यन्त्रविनाशनात्समभवत्सर्वत्र घोरं तमः ॥68॥

अम्रीकाक्रमणाद्भयार्तमफगानिस्तानराष्ट्रं ह्यभू
ल्लोका जीवितरक्षणाय बहवो याताश्च देशान्तरम्।
इस्लामस्य विरुद्धमेव समरं मा तर्कयेरन्निति
ह्यग्न्यस्त्रैः सममेव खाद्यपुटका अप्यत्र तैः पातिताः ॥69॥

## मुस्लीमानां युद्धविरोधः

अम्रीकाऽऽक्रमणस्य मुस्लिमजनै घोरो विरोधः कृत-
स्तीव्रोग्राणि निदर्शनानि विहितान्याक्रोशमावेदकैः।
पाके मुस्लिमराष्ट्रघोरपरिपन्थ्यम्रीकिराष्ट्राय तत्
तालीबानविरुद्धसाह्यकरणं लोकैर्भृशं निन्दितम् ॥70 ॥

क्वेटा-रावलपिण्डि-पेशवा-जकोकाबाद-काराचिषु
हिंस्रोग्राणि निदर्शनानि शतशः स्थानेषु चैवाभवन्।
येवेतस्य मुर्शरफस्य नीतिविषयोऽप्यालोचितो भीषणं
तस्मात् स्थानमपीह तस्य नियतं शङ्कास्पदं भाविनि ॥71 ॥

येषां पूर्णसमर्थनोपकृतिसख्यौदार्यसद्भावतः
श्रीपर्वेजमुशर्रफः समभवत् पाकस्य राष्ट्राधिपः।
तेषामेव विरुद्धमत्र गुलिका सञ्चालनीया ह्यभूद्
दैवेनैव हि वैरशोधनमकारीत्यत्र नो संशयः ॥72 ॥

युद्धं मुस्लिम-मुस्लिमेतरजनेष्वास्तीति मा भूद् भ्रम
इत्येव प्रतिपक्षिसैन्यशिबिराणां ध्वंसकास्त्रैः समम्।
दीनाकिञ्चननिःस्वमुस्लिमकृते खाद्यान्नवर्षा कृता
घुष्टं तत्तु जहादिमुस्लिमजनैर्युद्धं हि जात्योरिति ॥73 ॥

## भारतं प्रत्याक्रमणम्

पाकस्याक्रमणं विहन्तुमचिरादखूरपेण्ढास्यो-
रस्माकं हि सुसज्जसैनिकबलैः सीमामतिक्रम्य च।
पाकैकादशभीमसैनिकनिवेशाः पूर्णमुत्पाटिताः
पाकामेरिकयोश्च तेन समभूच्चिन्ता भयोत्पादिनी ॥74 ॥

अम्रीकीयविदेशमन्त्रिपरमः कॉलीन श्रीपाविलः
पाके तत्समये बभूव नियतं तेनापि बुद्धं भवेत्।
यत्तद्भारतशांतिसंयमपराकाष्ठाऽद्य संपूरिता
चिन्ताक्रान्तबुशैरपि प्रकटिता चिन्ता स्वकीया ततः ॥75 ॥

कश्मीरीयविधानसौघभवने घोरोग्रवाद्याक्रमो
ह्यम्रीकाऽऽक्रमतुल्य एव समभूदित्यत्र नो संशयः।
आदौ लादिनतालिबान हननं सम्पूर्णमुच्चाटनं
कश्मीरीयमतोग्रवाददमनं पश्चादिति श्रीबुशः ॥76 ॥

कश्मीरं खलु मुख्यवादविषयो देशद्वयस्यास्ति वै
कश्मीरीयमतानुसारमिह तत् स्यात्साधनीयो ध्रुवम्।
इत्युक्त्वा सुखदं वचः प्रणयिने पाकाय श्रीपाविलो
ह्यत्रागत्य तु भारतं सुखयितुं सर्वं विपर्यासयत् ॥77॥

तालीबानविरुद्धपाकसहयोगार्थं बुशैर्रीत्सितं
साहाय्यं दशकोटिडालरमितं तत्रापि शस्त्रस्य च।
चिन्ताकारणमेवभारतकृते पूर्वानुभूत्या ध्रुवं
साह्यं सर्वममेरिकावितरितं अस्मद्विरुद्धं गतम् ॥78॥

तालीबानविरुद्धघोरसमरे भौगोलिकात्कारणात्
पाकस्योपकृतिर्बभूव नितरामावश्यकी विद्महे।
किन्तु क्रूरतमोग्रवादिसहयोगात् तत्प्रतीपं रणो
जेतुं स्यात्कथमेव शक्यमिह नो जानीमहे तत्त्वतः ॥79॥

**अम्रीकोपर्याक्रमणे पाकसंलिप्तिः**

आन्ताराष्ट्रियघोरमुस्लिममहोग्रातंकवादाग्रणीः
पाको घोरतमोग्रवादशिबिराण्यायोज्य देशे स्वयम्।
कश्मीरे हतवान् निरीहसुजनान् त्रिंशत्सहस्राधिकान्
अम्रीकाऽऽक्रमणेऽपि तस्य सहयोगित्वं ह्यभून्निश्चितम् ॥80॥

केन्या-टांझनियादिदूतभवने घोराक्रमस्योत्तरं
लादेनोऽपि बभूव पाकविषये कालाय कंचिन् स्थितः।
लादेनस्य मुशर्रफेन सखिताऽप्यासीद् जगद्विश्रुता
ह्यम्रीकाऽऽक्रमणस्य कूटकपटं ज्ञातं च तेनाप्यभूत् ॥81॥

अम्रीकोपरि भीषणाक्रमकृदत्तऽभिघातङ्किने
पाकस्यैव रहश्चराभिकरणाध्यक्षप्रदानीकृतम्।
आसील्लक्षमितं च डालरधनं ह्येवं प्रकाशं गतं
तस्मात्तेन मुशर्रफेन समभूद् ज्ञातं तदायोजनम् ॥82॥

एवं सत्यपि लोकतन्त्रहननं तं पाकदुःशासनं
ह्यम्रीका सततं समर्थयति चेत् त्यक्त्वा महाभारतम्।
नूनं श्रेष्ठतमं विशालविपुलं तल्लोकतन्त्रं भुवि
तेनाम्रीकिविशालगौरवशोभाः स्याद्भृशं धूसरा ॥83॥

नूनं पञ्चदशे दिनेऽपि सततं काबूलकन्धारयो-
रन्यत्रापि महास्त्रवर्षणततिः प्रावर्तताव्याहतम्।
यस्मिँलादिनतालिबानरणसाहित्यं प्रणष्टं ह्यभू-
दोसामाशिबिरस्थलानि सुतरां ध्वस्तानि सम्पूर्णतः ॥84 ॥

तालीबानरणोपयोगिकरणं वायव्यघोराक्रमै-
र्ध्वस्तीकृत्य पुनः प्रवर्तितमभूद् भूयुद्धमेवात्र तैः।
विक्रान्तानवतार्यघोरसमरे भूसङ्गरार्थं भटां-
स्तालीबानविरुद्धभीषणरणस्तैश्चालितो दारुणः ॥85 ॥

तत्रस्थैर्जनजातिवंशसहिता रब्बानिसञ्चालिता
तालीबानविरुद्धयुद्धनिरता ह्यस्त्युत्तरीया युतिः।
यस्याः शासनमेव नूनमफगानिस्तानशास्तिः खलु
विश्वस्याखिलसभ्यराष्ट्रनिवहैः सैवास्ति मान्यीकृता ॥86 ॥

तालीबानसमर्थकमुजाहिदीनवधः

भ्वाकाशीयमहोग्रभीषणरणः प्राप्तो महातीव्रतां
द्वात्रिंशच्च मुजाहिदीनकितवाः पाकस्थिता नागराः।
कन्धारं च समागताः समभवन् साह्यार्थमातङ्किनः
विस्फोटास्त्रनिपातनेन सहसा सर्वेऽपि ते मारिताः ॥87 ॥

रमूजाने मुसलीमसान्त्वनकृते युद्धावरोधो भवे-
दित्थं पाकनिवेदनं तु सुतरामस्वीकृतं श्रीबुशैः।
रम्जाने किल मुस्लिमैरपि सदा युद्धं कृतत्वात् पुरा
तेषां प्रेषित मोहम्मदैरापिकृतं मासे पवित्रे युधम् ॥88 ॥

सेना गुप्तचरा गवेषकवरा अन्वेषकाः पेशला
लादेनं विफला गृहीतुमभवंस्तं जीवितं वा मृतम्।
गुप्तस्थानमपीह तस्य सुतरां ज्ञातुं न तेऽपारयन्
याते विंशदिनेऽपि नूनमफगानायोधनं प्राचलत् ॥89 ॥

तालीबानकरालघोरपतनं नैवास्ति दूरं बहु
पश्चात्कस्य भवेश्च शासनमिति प्रश्नोऽस्ति मुख्योऽधुना।
पाकः संयततालिबानसहितां शास्तिं समाकांक्षति
यस्मात्तस्य विरोधिशासनमिह स्यान्नाफगाने पुनः ॥90 ॥

तालीबानजनेषु नास्ति नियतं सौम्योग्रभेदः खलु
ग्राह्यं पाकमतं ह्यतो न भविता हीत्यम्रीकीयं मतम्।
तालीबानविरुद्धमेव नियतं प्रायः समेषां मतं
प्राक्कालीननृपो हि जाहिरशहाऽप्यामंत्रितश्चर्चितुम् ॥91 ॥

## क्रिश्चनानां हत्या

जात्यन्धैः किल पाकमुर्स्लिमजनैः प्रत्युग्रवादाहवं
जातीयं परिकल्प्य भीषणरणं ह्यष्टादशक्रिश्चनाः।
चर्चे नूनमुपासनां विदधतो ह्यादित्यवारे शुभे
पाकिस्तानगते च भावलपुरे व्यापादिता निष्ठुरम् ॥92 ॥

## पाकतालिबानयोः संयुतिप्रमाणम्

अम्रीकां सहयोक्तुकामविषया घोरारयः सन्ति नो
लक्ष्यं तेऽपि भवेयुरेव समरे घोराभियोगस्य नः
इत्युक्त्वाऽपि च तालिबानमुखरैः पाकप्रतीपं ध्रुवं
किञ्चिन्नैव कृतं न चापि गुलिका ह्येकाऽपि संचालिता ॥93 ॥

पाकेनापि न मित्ररात्रुभयतः सीमासुरक्षा कृता
तेन प्रत्युत तालिबानरणसंभारं च संरक्षितुम्।
आकाशीयमहाक्रमात्स्थगयितुं साह्यं प्रभूतं कृतं
साह्यार्थं बलनायका अपि च तैर्दत्ता इतिश्रूयते ॥94 ॥

पाकस्यैव विनिर्मितिः समभवत् तत्तालिबानं ध्रुवं
नूनं विंशतिवर्षदीर्घसमयं पाकेन तत्पोषितम्।
अन्ते तस्य बधाय पाकविषयः सिद्धः स्वयं स्यादिति
मिथ्यैवाम्रिकया विचारितमभूदित्यत्र नो संशयः ॥94 ॥

पाकिस्तानयथार्थनीतिचरिताचारादिसंवेदने
अम्रीकास्वहितैषिनायकवरैर्भ्रान्तिर्हि नित्यं कृता
आन्ताराष्ट्रियघोरमुस्लिममहोग्रातङ्कवादाग्रणी-
र्ज्ञातस्तैर्न कदापि पाकविषयस्तस्माद्विपकाः खलु ॥96 ॥

रौद्रं वृत्तमिदं प्रकाशमगमद् यत्पाकदेशे स्थितो
घोराण्वस्त्रनिधिर्गतोऽस्ति बहुशो लादेनहस्ताविति।
व्यग्रा नूनममेरिका ह्यतितरामन्वीक्षमाणाऽस्तित
पाके तेन भवेत् पुनश्च कठिना तच्छासकानां दशा ॥97 ॥

तालीबानविरुद्धकाफिरमहाक्रूराम्रिकाऽभिद्रवः।
पाकिस्तानसमर्थितो न रुचये तेषां जनानामभूत्।
चण्डोग्राणि निदर्शनानि शतशः पाकेऽभूवन् किल
स्फोटस्तस्य कदापि भीषणतमः पाके भवेन्निश्चितम् ॥98॥

## पाकस्य तालीबानसाहाय्यम्

पाकिस्तानसहस्रसंख्यकजना भीमास्त्रसज्जीकृता-
स्तालीबानजनांश्च घोरसमरे नूनं समालम्बितुम्।
तद्धिक्कृत्यमुशर्रफस्य वचनं ते तालिबानं गताः
प्रच्छन्नं पृतनाधिकारिसुभटा अप्यत्र तान् सङ्गताः ॥99॥

तालीबानमिलीशियोपरि तथा काबुलकन्धारयो-
रम्रीकीयविमाननिकरैर्घोराक्रमं साधितम्।
तस्मादुत्तरसंयुतिरपि प्रोत्साहिताऽभूद् ध्रुवं
तालीबानमनोबलं च समभूत् क्षीणं विनाशोन्मुखम् ॥100॥

तालीबानरणोत्तरीयसरणावुग्राक्रमान्निश्चितं
तेषां सामरिकोग्रभीषणबलं प्रायः प्रणष्टं ह्यभूत्।
तस्मादभ्युपगम्य भङ्गमिह ते स्वं ह्यर्पयेरन्निति
प्रत्याशापि बभूव पूर्णविफला युद्धं च दीर्घीकृतम् ॥101॥

षड्विंशे दिवसेऽपि घोरसमरे रौद्रास्त्रसंवर्षणे
लादेनो न धृतो न मुल्ल उमरस्तत्तालिबानाधिपः।
नो तेषामलकायदेति विकटः सङ्घोऽपि बन्दीकृत-
स्तस्मातत्प्रतिभाति निष्फलमिव क्रूराफगानाक्रमः ॥102॥

पाकान्तर्गतगुप्तचारघटनं शस्त्रास्त्रसाह्यं भृशं
तालीबानजनाय यच्छतितरां गूढं निशायामिति।
तत्सर्वं निभृतं च मस्जिदगृहेष्वेवात्र तैः स्थाप्यते
काठिन्यं ह्यत एव तत्र समरे ह्यम्रीकया सूचितम् ॥103॥

जैशे मोहम्मदतोयबालष्करे हीत्युग्रसंघद्वयं
कश्मीरे च सहस्रशोऽनघजना येनाभवन् घातिताः।
घुष्टं यच्च मुशर्रफेन बहुशः स्वातन्त्र्ययोधा इति
तच्चोद्घोष्य महोग्रवादिघटनेत्यम्रीकया बन्धितम् ॥104॥

पाकान्तर्गतगुप्तचारनिगमं सेनाश्च पौरा जनाः
प्रायो घोरतमोग्रवादशरणा अम्रीकिविद्वेषिनः।
तालीबानसमर्थकाश्च नितरामातङ्किसंपोषकाः
एकस्तत्र मुशर्रफोऽस्ति सुतरामम्रीकिमित्रोत्तमः ॥105 ॥

पाको यज्जनकः समर्थकवरः संधारकः प्रेरकः
जैशेलष्करतोपबादिविकरालातङ्किसंघाश्च ते।
भिन्नाः सन्ति न तालिबानगणतो न ज्ञातमम्रीकया
तस्मात्प्रतिबन्धनं समभवत् प्रागेव चावश्यकम् ॥106 ॥

मासोर्ध्वं ह्यपि नैव युद्धशमनस्याशास्ति काचिद् ध्रुव-
मत्युग्रः समरो मजारशरिफं प्राप्तुं समापद्यत।
घोराग्न्यस्त्रनिपातनोपकृतितः प्रोत्साहिता संयुतिः
काबूलं निकषा भविष्यतितरां द्रागेवमश्रूयत ॥107 ॥

तालीबानमिलीशियोपकृतये युद्धाय बद्धस्पृहाः
प्रायो ह्यष्टसहस्त्रपाकवनजाः सीमामतिक्रम्य च।
सम्प्राप्ता अफगानभूमिमपि ते वार्तेत्यभूत्प्रसृता
तस्माद् भूसमरो भवेच्च विकटो हीत्यूहितं नागरैः ॥108 ॥

तालीबानसमर्थकैश्च नितरामम्रीकिविद्वेषिभि-
र्लादिनप्रतिमाऽवलम्बितकरैः प्रत्यम्रिकां घोषकैः।
पाके बन्धनिदर्शनानि च जनैरायोजितानि ध्रुवं
नैके यत्र हताः क्षताश्च बहवो गोलाप्रहारे कृते ॥109 ॥

## द्वेधानीतिर्नैव युक्ता

अम्रीकामधिकृत्य भिन्न, इतरः कश्मीरचेचन्ययो-
द्वेधो नैव नयो भवेत्समुचितो ह्यातङ्कवादं प्रति।
इत्थं भारतरूसमन्त्रिवरयोर्मध्ये ह्यभून्निश्चितं
मास्कोदेहलिराजधानिपुरयोः सञ्जातसम्भाषणे ॥110 ॥

अस्मद्राष्ट्रमहाप्रधानसचिवः श्रीबाजपेयी सुधी-
रम्रीकां किल राष्ट्रसंघसदसः सम्मेलनार्थं गतः।
तस्यां तेन हि भाषणेन सहितं संभाषितं श्रीबुशै-
रेकीभूय महोग्रवादविपदं योद्धुं समाकारयत् ॥111 ॥

देशाः केचन धर्मराजकार्यमिषतश्चातङ्कवादं भुवि
ह्येकत्र प्रतिषेधयन्ति बलवद् संघारयन्त्यन्यतः।
द्वैधां नीतिमिमां विरोद्धुमखिलान् देशान् समामन्ययत्
नो चेत्स्याद् ध्रुवमेव रन्ध्रसहितः प्रत्युग्रवादं रणः ॥112॥

तस्यां जागतराष्ट्रसंघसदसि प्रोत्थापितोऽभूत् किल
पाकाध्यक्षमुशर्रफेन नियतं कश्मीरवादः पुनः।
पॅलेस्टायिनबोस्नियादिसदृशं तद्वर्णितं कश्मिरं
यत्रस्था लघुसंख्यमुस्लिमजनाः पीडयन्त इत्युक्तवान् ॥113॥

कश्मीरे खलु भारतेन विकरालातङ्कवादः स्वयं
दीर्घादिव हि चाल्यमान इह तै रोद्धव्य एवाचिरम्।
यच्चाल्लोकमतानुसारमिह तद्भाग्यस्य निर्धारण-
मित्थं केवलतथ्यहीनवचनैर्भ्रान्तं जगत् साधितम् ॥114॥

तस्यात्यन्तकठोरमुत्तरमभूद् दत्तं महामन्त्रिभिरः
यत्कश्मीरमिहास्ति भारतभुवो नूनं ह्यभिन्नाङ्गकम्।
शक्तिः काऽपि न भारताद्विघटितुं शक्ताऽस्ति तं भूतले
कश्मीरे जनतान्त्रिकं भवति वै निर्वाचितं शासनम् ॥115॥

आक्रान्तेति बभूव राष्ट्रसभया पाकः पुरा घोषितः
कश्मीरस्य बलाद् गृहीतविषयस्त्यक्तुं च सम्बोधितः।
किन्त्वद्यापि न पालितः स नियमः पाकेन दीर्घावधौ
पाकाक्रान्तविभागरिक्तकरणं प्रश्नोऽस्ति मुख्योऽधुना ॥116॥

अम्रीकीयसुरक्षणेऽप्यधिकृतो रूम्स्फील्डनामाभिधो
रक्षामन्त्रिवरो हि भारतभुवं सम्प्राप्य चाश्वासयत्।
यल्लादेनविरुद्धमेव नहि तद् युद्धं भवेत्केवलं
नूनं जागतिकोग्रवादमखिलं लक्ष्यं विदध्यादिति ॥117॥

पाकाध्यक्षमुशर्रफेन सहितं सम्भाषणे श्रीबुशैः
कश्मीरीयमतं परीक्ष्य नियतं संसाधनीयो भवेत्।
कश्मीरस्य चिराद् विवादविषयो हीत्येव संभाषितं
ह्येवं पाकसमर्थनं च विहितं कश्मीरवादे बुशैः ॥118॥

पाकं घोरतमोग्रवादजनकं तत्तालिबानाश्रयं
तालीबानविरुद्धमेव कृतकं साह्यार्थमम्रीकया।
कृत्वा तस्य मुशर्रफस्य नवनं साह्यं महदित्सितं
कश्मीरीयमहोग्रवादविषये नाश्वासितं भारतम् ॥119॥

कश्मीरस्य तु बाजपेयिमिलने नामापि नोच्चारितं
कश्मीरीयमहोग्रवादविषये चिन्ताकुला नैव ते
पाको मित्रवरश्च मुख्यविषयो नो भारतं तत्कृते
तेषां जागतिकोग्रवादशमने मिथ्या प्रतिज्ञा खलु ॥120॥

### उत्तरसंयुतेर्विजयः

युद्धे तूत्तरसंयुतेः समभवन्नूनं प्रचण्डो जयो
ह्यम्रीकीयविमानयानततिभिर्ह्यग्न्यस्त्रसंवर्षणैः।
सार्धं भूदलसैनिकैरपि कृतो घोरोग्रभीमो रणो
ह्यन्ते काबुलराजधानिसहितं प्रान्ताश्च नैके जिताः ॥121॥

### लोकानामानन्दोत्सवः

तालीबानपराभवात्प्रमुदितैर्बन्धाद्विमुक्तैरिव
काबूलस्थजनैः प्रशासनवशात् श्मश्रुश्चिराद्धर्धिता।
आनन्दात्क्षुरिता तथायुवतिभिस्त्यक्ता तिरस्कारिणी
संगीतश्रवणं कृतं बहुतिथात्कालाज्जनैर्हर्षितैः ॥122॥

कुण्डूसं किल तालिबानबलवद् दुर्गं गृहीतुं ततः
संग्रामस्तुमुलो बभूव शतशो यस्मिन् हताः सैनिकाः।
कुण्डूसं च ततः पपात शरणं प्राप्ता भटा भूरिशः
कन्दाहारविना समस्तविषयो जातो वशे संयुतेः ॥123॥

कन्धाहारकृते ततः समभवद् घोरो रणो भीषणो
मुल्लावोमरमुख्यकेन्द्रमपि तज्जातं वशे संयुतेः।
तालीबानभटा हताश्च बहुभिः स्वात्मार्पणं साधित-
मित्थं संयुतिशासनेन विजितो देशो समस्तोऽपि च ॥124॥

कन्धाहारपराभवेन नियतं युद्धं समाप्तिगतं
मुल्लावोमरलादिनौ तु निभृतं ज्ञातं न कुत्रस्थितौ।
कन्धाहारसमीपपर्वतगुफास्वन्तर्हितं संस्थिता-
वित्येव क्रियते च तत्र बलवदग्न्यस्त्रसंवर्षणम् ॥125॥

एतद्घोरतमाफगानसमदं तावच्चलेत् संततं
लादेनोऽप्यलकायदादलसमं यावन्न सम्प्राप्यते।
तालीबानकुशासनं च सुतरामुत्पाटय सम्पूर्णत-
स्तत्स्थाने न नवीनशासनमपि प्रस्थाप्यते व्यापकम् ॥126 ॥

लादेन ग्रहणाद्भवेन्न विरतः प्रत्युग्रवादं रणो
कार्यं तस्य यतो हि सर्वभुवने व्याप्तं दरीदृश्यते।
तस्यासंख्यजहादिशिष्यपरमैरिस्लामधर्माय वै
प्राणत्यागकृते गृहीतशपथैरग्रेऽपि तच्चालयेत् ॥127 ॥

## तालीबानोत्तरशासनम्

तालीबानपराजयोत्तरमिह स्यात्कीदृशं शासनं
प्रश्नोऽयं प्रमुखो नितान्तकठिनः सर्वत्र तैश्चर्चितः।
तालीबानविहीनसर्वजनजातीयं भवेच्छासनं
सर्वेषां च मते तु राष्ट्रसदसो निर्देशने स्यादिति ॥128 ॥

शार्मण्ये विषये च बॉननगरे सम्मिल्य सर्वैर्जनैः
पख्तूनीयहमीदकर्जयिसमाख्यो नायकः स्वीकृतः।
तालीबानविहीनशासनकृते षण्मासकालावधौ
पश्चात्तत्र भवेच्च सर्वजनतानिर्वाचितं शासनम् ॥129 ॥

नित्यं मासयुगं करालविकटादग्न्यस्त्रसंवर्षणा-
दुध्वस्तश्च बभूव पूर्णमफगानिस्तानदेशो ध्रुवम्।
निष्पापाश्च सहस्रशोऽनघजना नूनं हता निष्ठुर
घोरापत्खलनायकौ तु न धृतौ लादेनमुल्लोमरौ ॥130 ॥

स्यातां तावपि शीघ्रमेव विधृतावित्यत्र नो संशयः
पश्चात् किं विरतो भवेच्च सहसा प्रत्युग्रवादं रणः।
पाको येन महोग्रवादिकितवान् सम्प्रेष्य भूकश्मिरे
निःसंख्याः सुजना हता अकरुणं किं नो निगृह्येत तैः ॥131 ॥

## अम्रीकापक्षपातः

देशे पाकमहोग्रवादिकितवैः षष्टिः सहस्रं हताः
कश्मीरीयविधानसौधमपि तैराक्रान्तमातङ्किभिः।
तैराक्रान्तमभूत्ततो भरतभूसंसत्सभामन्दिरं
ह्येवं सत्यपि तस्य साह्यमखिलं चित्रं! विदधत्तेऽम्रिका ॥132 ॥

अम्रीकाऽऽक्रमणेऽपि पाकविषयो गुप्तं प्रलिप्तो ह्यभूत्
तस्या एव हि पत्रकारपरलः पाकीयधूर्तैर्हतः।
अम्रीकावरवङ्गकेन्द्रमपि तैराक्रान्तमातङ्किभि-
स्तद् ज्ञात्वाऽपि करोति पाकविषयं दूरं न साऽमेरिका ॥133॥

एषा नूनममेरिकाकृतिरभूत्संयुक्तराष्ट्रस्य तत्-
प्रस्तावस्य विरुद्धमेव खलु यद् घोरोग्रराष्ट्राय च।
साह्यं वा शरणं हि राष्ट्रसंघसदसो देयं न देशैरिति
नो चेत्तेऽपि भवेयुरेव सुतरां दण्डार्हदोषास्पदाः ॥134॥

विश्वाद् घोरतमोग्रवादहनने तस्याः प्रतिज्ञाऽपि सा
घोरातङ्किसमर्थनाददतितरां मिथ्यैव भाति ध्रुवम्।
तालीबानविरुद्धघोरसमरोऽप्यम्रीकिराष्ट्रस्य सः
नूनं केवलवैरशोधनकृतिः प्रत्युग्रवादं नहि ॥135॥

तालीबानविरुद्धयुद्धसमये श्रीमद्बुशैर्घोषितं
यत्कश्मीरमहोग्रवादमपि तं योत्स्यामहे निश्चितम्।
रक्षामन्त्रिवरैश्च विदेशसचिवैस्तस्यानुनादः कृतो
ह्येतद् भारतनायकान् सुखयितुं तैः केवलं घोषितम् ॥136॥

अम्रीकारूचये न भारतभुवः सम्मेलनं भारते
पाके तद् विलयेद भवेच्च यदि वा स्वायत्तराष्ट्रं भुवि।
इत्येवास्ति समीहितं दृढतरं ह्यम्रीकिराष्ट्रस्य वै
कश्मीरे खलु येन तस्य भविता सेनानिवेशो महान् ॥137॥

पाकाय प्रखरोग्रवादिसुहृदे साह्यं विधात्री चिरं
विश्वव्यापिमहोग्रवादसमरे सा स्यात्कथं भागिनी।
नूनं स्वार्थपरा न भारतभुवो मित्रं भवेत्साऽमेरिका
कार्यः केवल भारतेन हि भवेत् प्रत्युग्रवादं रणः ॥138॥

सङ्घर्षे सति पाकभारतभुवोर्यस्यास्ति संभावना
ह्यम्रीका न कदापि भारतभुवः साह्यं विदध्यादिति।
निश्चित्यैव सुरक्षणाय करणीया स्यात्स्वयं सिद्धता
रूसैर्मित्रवरैश्च चीनसदृशैः कृत्वां दृढं मित्रताम् ॥139॥

# मन्दस्मितं मोनालिसायाः

## रमाशङ्करतिवारी

(मोनालिसा ववृते युवती पत्नी सामन्तस्यैकस्य इटलीदेशस्य पञ्चदशशताब्दौ। तस्याः मन्दहासस्य चित्रमङ्कित लियोनार्डो डा विंशी इत्याख्य-प्रसिद्धचित्रकारेण। रहस्यं मोनालिसायाः मन्दस्मितस्य वर्तते 'निहितं गुहायाम्' अद्यावधि अथ च कलाकोविदाः विश्वस्य प्रयतन्ते अन्वेष्टुं तद्रहस्यम्। चित्रमेतत् विद्यते सुरक्षितं एकस्मिन् संग्रहालये फ्रान्सदेशीये च।) ॥1 ॥

अयि मोनालिसे!
उन्मीलयरहस्यं तवास्मितस्य अभेद्यञ्च गहनम्,
यल्लोभयति मानसं कलाप्रेमिणां खलु युगे युगे च,
बन्दीकृतस्य चित्रकारेण कुशलेन नैजस्यां तूलिकायाम्।
वर्तते खण्डयत् अनुमानं चिन्तनं कलाकोविदानामद्यावधि हि,
दृष्टकूटमिव न कोऽपि प्राभवत् भेत्तुं तव जीवनजवनिकाम्॥
कि प्रस्मयसे सुमधुरं क्षिपन्ती तव मनोरमणं यजालम्
मनस्पटले प्रेक्षकाणां पालयन्ती मधुरिमानं च काले प्रवाहे।
हिरण्मयपात्रेण पिहितं सत्यस्य वदनं वदति श्रुतिमदर्गवदीया,
कदा प्रकटिष्यसि सत्यकीरं कुलापिकायाः रमणीयतायाः ॥2 ॥

अयि मोनालिसे!
अपि मन्दहासोऽयं भवति लोभनीयाभिव्यक्तिः निगूढा,
मनःकलिकायाः उन्मीलितायाः प्रथमदर्शने खलु प्रियस्य॥
अपि वर्ततेऽयमभिव्यक्तिः कस्याश्चन ऊर्म्याः प्रणयपल्लवलस्य,
यस्यां प्लवमानो बभूवमानसं हंसो वल्लभस्य रिरसोश्च॥
अपि वर्तते स्मितमिदं सूचकाङ्कः कस्यचन मनःसङ्कटस्य,
नूनं स्वीकारास्वीकारमध्ये तव गोपनीये प्रणयजीवने किल।
अपि वर्तते मन्दहासोऽयमभिनन्दनं कस्मौचन अभ्यागताय सम्मानिताम्
कस्याश्चनमनेकायाः सुसज्जितायाः नीराजनाश्रेण्या मन्दस्मितस्य॥
अपि वर्ततेऽयं प्रत्युत्तरं कस्याश्चन प्रेमिकायाः प्रणयाचरणं समाश्रित्य,
कस्यचन कामुकस्य खल्वज्ञातशीलस्य वैशङ्कनीयस्य नूनम्।
अपि वर्ततेऽयं प्रतीकारंकवचं कस्य चन्तकास्मिक संशयस्य,
यतो हि भीषयति रूपमाधुरी दिव्या प्रथमं बर्बरपशूनपि॥

अपि वर्ततेऽयमभिव्यक्तिः कस्याश्चन वेदनायाः खल्वस्फुटायाः,
अविज्ञाताय लोकस्य विज्ञातायाः चित्रकारस्य वै संवेदनयुतस्य ।
अपि वर्ततेऽयमभिव्यक्तिः कस्याश्चन करुणायाः वा कस्यचन खल्वप्रेम्णः,
छलनाख्यो तदपि दुर्भावनया विमुक्ता, कथय च सुन्दरि हे ॥3॥

अयि मोनालिसे!
नूनं विद्यते केवलं माधुर्यमैन्द्रजालिकं तवपाटले मन्दहासे,
प्रणयजीविनां कृते ये दोलार्यतुमारभन्ते कतिपयेषु क्षणेषु,
सदृश तव ललितं हासं खल्वनुमानस्वप्नयोः प्रेङ्खणे च ॥
उन्मीलय रहस्यं तव मन्दहासस्य सनातनस्य निगूढम्,
अपि वर्ततेऽयं निर्ममं व्यङ्ग्यं प्रति विज्ञानबुद्धिम्,
चाहिमं यति सौन्दर्यविहंगे सत्यस्य खल्वन्वेषणाय ॥
तदपि सौन्दर्यस्य माया विद्यतेऽव्याहता सर्वकाले यतो हि,
सा वर्तते ब्रह्मणः सहचरी सुनियता या खलूपकुरुते सर्गं विसर्गम् ॥4॥

अयि मोनालिसे!
ध्रुवमिदं यन्नास्ति स्वर्ग्यसुषमा इयं किल पौधशाला,
कस्यापि शाठ्यस्य वा जाल्मतायाः वा दुर्भावनायाः नियतम् ॥
इदं प्रतिभाति मे मन्दहासोऽयं मधुमयो भवति कस्याश्चिद् राधिकायाः
प्रत्यागच्छन्त्याः 'पनघटात्' विस्रब्धं सहजबुद्ध्या,
यस्याः मार्गं रुणद्धि कश्चन मुरलीवादकः परिरम्भलोलुपः लांलप्यमानः ॥5॥

---

*गद्यबन्धः*

# मालविकाग्निमित्रे प्रकृतिवर्णनम्

मावेलिक्कश अच्युतन

कविकुलगुरुः कालिदासः विश्वविद्युतनाटकत्रयरचनेन न केवलं मानवमनोमण्डलस्य किन्तु विश्वप्रकृतेः सौन्दर्यरत्नभण्डागारस्यापि कवाटविपाटनं चकारेति विश्वसिमि। सकलसहृदय-मनोविनोदनक्षमे विक्रमोर्वशीये भावुकमानवचित्ते मालविकाग्निमित्रे नाट्यदेवताकुटिलकुन्तलरूपे शाकुन्तले च प्रकृतिसौन्दर्यस्य निपुणं चित्रीकरणं सुष्ठु द्रष्टुं शक्यते।

महाकविना प्रथमतया विरचितं नाटकं विक्रमोर्वशीयमिति विदुषां मतम्। अस्मिन् दृश्यमानं प्रकृतिवर्णनमधुना निर्वर्णयामः। अत्र पञ्चसंख्याकेषु सर्वेष्वपि नाटकाङ्केषु संग्रथिताः सर्वाः कथाः अपि प्रकृतेरङ्कतले एव संभवन्ति। प्रथमाङ्के कुबेरभवनसन्दर्शनानन्तरं सख्या चित्रलेखया सह प्रतिनिवृत्तायाः उर्वश्याः असुरकृतमपहरणं पुरूरवसा कृतं तद्रक्षणञ्च प्रतिपादितम्। अत्रासुरकृतबन्धनजनितमोहालस्यात्समुत्थिता देवाङ्गना तमसा मुच्यमाना रात्रिरिव अपगतधूमा वाह्निशिखेव प्रसादं प्राप्ता रोधः पतनकलुषा गङ्गेव च विराजते। विश्ववश्यायाः उर्वश्याः सृष्टिः वेदाभ्यासजडेन पितामहेन न कृता, किन्तु शीतलकिरणेन चन्द्रेण कामिनामुन्माददायिना वसन्तेन शृङ्गारैकरसेन मन्मथेन वा कृतेति राजा अनुमिनोति। पुनः पुरुषसौन्दर्यस्य निदर्शनं पुरूरवसः सुन्दरमुखचन्द्रं हृदि निधाय मदालसा सा चित्ररथेनानीतं विचित्रं रथमारुह्य स्वर्गं प्रति निवर्तते। तदा लताकृतोपरोधेनेव सा साकूतं वलितकन्धरा भूत्वा स्वहृदयचोरं पुरूरवसं कुटिलकटाक्ष-विक्षेपेणानुजग्राहेति नायकस्वगतवचनाज्ज्ञायते। यथा :

> प्रियमाचरितं लते त्वया मे गमनेऽस्याः क्षणविघ्नमाचरन्त्याः।
> यदियं पुनरप्यपांगनेत्रा परिवृत्तार्धमुखी मयात्र दृष्टा॥

अमुमेवाशयं 'दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे तन्वी स्थिता कतिचिदेव पदानि गत्वा' इति शाकुन्तलद्वितीयाङ्कगतश्लोके परिष्कृत्याविष्करोति कविरिति मन्ये।

विजने प्रमदवने द्वितीयाङ्कः समारभते। तत्र माणवकनामकस्य विदूषकस्य नायकस्य च मिथः संवृत्ते रहस्संवादे 'किं तत्र भवती उर्वशी अद्वितीया रूपेण' इति पृष्टः राजा एवं समाधत्तेः "प्रत्यवयवमशक्यवर्णनां तामवेहि—'आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः'।"

अस्मिन्पद्ये परामृष्टमुत्कृष्टमाशयमनुकृत्य केरलीयसंस्कृतमहाकविः नारायण-भट्टतिरिमहाभागः स्वकीये नारायणीये 'मधुरं माधुर्यधुर्यादपि, सौन्दर्योत्तरतोऽपि सुन्दरतरं' इत्यादिरूपं गुरुवायुपुरेशदिव्यमोहनविग्रहवर्णनं कृतवानिति तर्कयामि। पुरूरवसः उर्वशीविषयकः उद्दाममदनोन्मादः मलयमारुतोद्धूतानां उपवनसहकारतरुगताङ्कुराणां दर्शनेनातितरां वर्धते। प्रमदोद्याने विद्यमानो दक्षिणमारुतः दक्षिण नायक इवाचरति। एतां माधवीलतां सुशीत-

लांबुकणिकाभिः निषिञ्चन् उल्लसत्कुन्दवल्लीं सुखकरकरस्पर्शेन नर्तयन् दाक्षिण्यस्निग्धशीलो सौ तरुणमारुतः कामुकचेष्टां करोतीति कविवचनं समीचीनमेव। 'शृङ्गारी चेत्कविः काव्ये सर्वं रसमयं जगत्' इति आनन्दवर्धनभणितिरिह स्मरणपथमागच्छति। स्वकीयहृदयोपवने विकसितस्य सुरभिलप्रणयकुसुमस्य प्रतिफलनं कामी तरुलतादिषु बाह्यपदार्थेषु पश्यति। एवञ्च वसन्तलक्ष्मीः कौमारयौवनावस्थयोः मध्यवर्तिनी काचित्कामिनीति कविः कल्पयति। यथा–

अग्रे स्त्रीनखपाटलं कुरवकं श्यामं द्वयोर्भागयो-
रक्ताशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति।
ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी
मुग्धत्वस्य च यौवनस्य च सखे मध्ये मधुश्रीः स्थिता॥

तदा विदूषकः राजानमेनं उपवनान्तर्भागा स्थितं कुन्दलताकुञ्जं नेतुमिच्छन्नेवं वक्ति। "देव! एष खलु मणिशिलापट्टकसनाथोऽतिमुक्तलतामण्डपो भ्रमरसंघट्टपतितैः कुसुमैः स्वयमिव कृतोपकारो भवन्तं प्रतीच्छति।" किन्तु उर्वश्याः विश्वोत्तरलावण्यदिदृक्षयाऽक्षमस्य नृपस्य लतादर्शनमानन्ददायकं नाभवत्। यथा :

मम कुसुमितास्वपि सखे!
नोपवनलतासु नम्रविटपासु।
चक्षुर्बध्नाति धृतिं
तद्रूपालोकदुर्लालितम्।

तदा मदनविकारविवशा उर्वशी आकाशदेशादवतीर्य नखैर्लिखितं कामलेखं विस्मिताय तस्मै कामुकाय समर्पयामास। शाकुन्तलेऽपि कामलेखसमर्पणमस्ति। तत्र तु नखैः पद्मपत्रे तल्लिखितं, इह तु भूर्जपत्रे इति सन्दर्भयोरनयोर्भेदः। कालिदासकालेऽपि कामिनोर्मिथः कामलेखप्रेषणमासीदिति अस्मात्परामर्शादवगन्तव्यम्। पुनः भरतकृतनाटकेऽभिनेतुं सा स्वर्गं गन्तुं निर्बद्धाऽभवत्। तदा विधिवैपरीत्येन भूर्जपत्रं तत् राज्ञीहस्ते चपलमारुतपोतेन विन्यस्तं प्रणयकलहकारणमभवत्।

तृतीयाङ्कारम्भे सन्ध्यावन्दनानन्तरमन्तःपुरान्तिके विश्रमसुखमनुभवतः पुरूरवसः वर्णनमस्ति। अत्र निद्रामुद्रालसाः निश्चलाः मयूराः विद्यन्ते; जालकाद्बहिरागताः होमधूमपंक्तयः पारावतराजय इव विराजन्ते च। अन्तःपुरं प्रस्थितः पुरूरवाः परिजनकरविराजितदीपिकाभिः परिवृतस्सन् विकसितकर्णिकारकुसुमविलसितः कश्चन चलमानोऽचल इव वर्णितः।

चतुर्थाङ्के उर्वशीपुरूरवसोः गन्धमादनवने प्रचलितस्य मंगलसंगमसौभाग्यस्य सद्यो जातः अविचारितप्रतिबन्धः प्रतिपाद्यते। गङ्गापुलिने क्रीडन्तीं विद्याधरयुवतिमुदयवतीं सकुतुकमवलोकयन्तं स्वप्रियतमं वीक्ष्य रोषकालुष्यकषायितनेत्रा उर्वशी तस्माद्देशान्निष्क्रमे। सा पुनः निषिद्धवनिताजनप्रवेशनं कुमारवनं प्रविश्य दुर्वारशापशक्त्या लतारूपेण परिणताऽभवत्। ततः प्रियजनविरहजनितोत्कटोत्कण्ठ्या दूयमानहृदयो राजा अत इतस्सञ्चरन् दीनदीनं विलपति। तस्य विरहतापस्य हृदयद्रवीकरणचणं विवरणमस्मिन्नङ्के विद्यते। सः काननतरुलतापक्षिमृगादीन्

प्रति 'किं यूयमभागस्य मम प्रियतमां दृष्टवन्त इति सोष्मलनिश्वासं पृच्छति। कानिचनोदाहरणानि अत्रोद्ध्रियन्ते–

"बर्हिणः त्वामित्यभ्यर्थ्यते आचक्ष्व मे तदत्र वने भ्रमता यदि त्वया दृष्टा मम नष्टा कान्ता"

"नीलकण्ठ! ममोत्कण्ठा वनेऽस्मिन् वनिता त्वया
दीर्घापाङ्गा सितापाङ्गा दृष्टा दृष्टिक्षमा भवेत्।"

अथ परभृतं प्रत्यभ्यर्थना :

"परभृते मधुरप्रलापिनि कान्ता नन्दनवने स्वच्छन्दं भ्रमन्ती
यदि त्वया प्रियतमा सा मम दृष्टा तद्याचिक्ष्व मे परपुष्ट।"

पुनः पुरूरवाः विरहवेदनानुभवे चिरपरिचयसम्पन्नं चक्रवाकमेवमाह्वयति :

गोरोचनावर्णचक्र भण मां मम सरसि
क्रीडन्ती धन्या न दृष्टा त्वया
रथाङ्गनामन् वियुतो रथांगश्रोणिबिंबया
अयं त्वां पृच्छति रथी मनोरथशतैर्वृतः।

अथ सुरभिकन्दनामकं सुन्दररूपं गिरिवरं पृच्छति :

स्फटिकशिलातलनिर्मलनिर्झर!
बहुविधकुसुमैर्विरचितशेखर!
किन्नरमधुरोद्गीतमनोहर!
दर्शय मां मम प्रियतमां महीधर!

अचेतनं गिरिवरं प्रति कृतामभ्यर्थनां अन्यत्र 'कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु' इति पद्यखण्डेन कालिदासस्साधूकरोति किल।

तदनन्तरं कामान्धो राजा तरंगभ्रूभंगाभिरामां गंगां कांचन कांचनभूषणभूषितामभिरामां रामां मत्वा तदानी निवेदनं दीनमर्पयति : यथा–

"तरंगभ्रूभंगा क्षुभितविहगश्रेणिरशना
विकर्षन्ती फेनं वसनमिव संरंभशिथिलम्।
यथा विद्धं याति स्खलितमभिसंधाय बहुशो
नदीभावेनेयं ध्रुवमसहना सा परिणता"

आनन्दवर्धनेन ध्वन्यालोके अचेतनवस्तुनि चेतनत्वकल्पनारूपं रसवद्लङ्कारः मुद्राहर्तुमुद्ध्रियतेऽयं श्लोकः–

पुनः कोपनां तां प्रसादयितुमेवं भणति :
'प्रसीद प्रियतमे सुन्दरिके नदि!

क्षुभिताऽकरुणविहंगमके नत्या
सुरसरित्तीरसमुत्सुकैणक!
अलिकुलरवझंकारिते एतया।'
'त्वयि निबद्धरतौ प्रियवादिनि!
प्रणयभंगपराङ्मुखचेतसि कमपराधलवं मयि पश्यसि
त्यजसि मानिनि दासजनं यतः' इति।

अत्र मानवीकरणेन नद्यां देवीत्वमारोप्यते। अथ वनसानौ स्वैरं सञ्चरन्तं गजराजं ललितकोमलकान्तपदावलिभिरेवं वर्णयति कविः।

'अभिनवकुसुमस्तबकिततरुवरस्य परिसरे
मदकलकोकिलकूजितरवझंकारमनोहरे।
नन्दनविपिने निजकरिणीविरहानलेन सन्तप्तो
विचरति गजाधिपतिरैरावतनामा॥'

अस्मिन् पद्ये समासोक्तिरतिशयोक्तिरिति अलङ्कारद्वयं चमत्कारमातनोति। ऐरावतनामा गजराजः वस्तुनः क्षितिराजस्य पुरूरवसः प्रतीकभूत एव।

चतुर्थाङ्कावसाने संगमनीयरत्नं धृत्वा लतामालिंगन् राजा सद्यः हृद्यमुर्वशीरूपं प्राप्तवर्ती तां दृष्ट्वा अद्भुतानन्दपरवशो बभूव। विरहदुरितशमनौषधरूपप्रियतमांगसंगमसौभाग्यादमृतास्वादसुखमनुभूय तत्र चिरमुवास च।

अत्र सर्वत्र जडप्रकृतिरपि कालिदासीयवचोमृतप्रस्तवणेन चेतनानिर्भरा भवति। एष एव महाकवीनां तूलिकापिञ्छदण्डस्य मास्मरिकप्रभावः।

---

# कश्मीरदेशस्य भौगोलिकी स्थितिः

## बदरीनाथकल्ला

### (क) भारतस्य मानचित्रे कश्मीरस्य स्थितिः

भारतस्य मानचित्रे काश्मीरमण्डलं स्वर्णकिरीटवच्छिरसि विराजते। विविधवनोपवनसमावृतं नानानदनदीसरसनाथितं हिमशृंगशोभितं नीलानन्तमार्तण्डक्रमसरनागादिभिः समाश्रितमिदं मण्डलं केषां मनांसि न हरति? यत्र समुद्रसदृशविशालेझीलड़लोल्लोल (वुलर इति कश्मीरी भाषायां) नाम्नी सरसी दर्शकानां किमप्यनिर्वचनीयमानन्दमुत्पादयतः। यत्र भूतेश्वरामरेश्वरत्रिपुरेश्वरकपटेश्वर-विजयेश्वरहर्षेश्वरविंगलेश्वरादि प्राचीनख्यातदेवालयभूषितस्थानान्यद्यादि दरीदृश्यन्ते। यत्तु हेलाराजमहर्षिभृंगीशनीलछविलाकर-सुव्रतक्षेमेन्द्रकल्हणबिल्हणजोनराजश्रीवरप्राज्यभट्ट-शुकादिभिरितिहासकाराणां विविधशास्त्रनिष्णाताचार्यपदसमलंकृतानां भरतानन्दवर्धनमहिमभट्ट-श्रीशंकुकरुय्यकभट्टलोलटाभिनवगुप्तमम्मटोल्लटरुद्रटकैयटादिभिरालंकारिकाणां कश्मीरी-भावोत्कृष्टशितिकण्ठलूलदूयदनुन्दर्षिभट्टावतारपरमानन्दशमसफक़ीरवहाबखारप्रभृतीनां कृतिभिश्चिरात् विदुषां चेतांसि समाकर्षति।

भौगोलिकी स्थिति—भूखण्डोऽयं भारतस्योत्तरपश्चिमकोणस्थः[1] सर्वोत्तरप्रदेशोऽस्ति। वर्तमानकश्मीरराज्यं 3217 अक्षांशतः 36-58, 30 अक्षांशपर्यन्तं 7336 देशान्तरतश्च 8030 देशान्तरपर्यन्तमस्ति। अस्याधुनिकभूपरिमाणं 80100 वर्गमीलमितमस्ति।

### राजतरंगिण्यानुसारं कश्मीरस्य भौगोलिकी सीमा

कश्मीरस्योत्तरस्यां दिशि पामीरपर्वतोऽस्ति यस्तु प्राचीनकाले—कम्बोजदेशनाम्ना सुप्रसिद्ध आसीत्। कश्मीरस्योत्तरा दिक् पामीरपर्वतशोभितः। अयं पर्वतः प्राचीनकाले कम्बोजनाम्ना सुप्रसिद्धः। अधुना चीनरूसराज्ययोः सीमात्र संमिलति। पुरा किल भारतवर्षकम्बोजयो मध्यमो मार्गो व्यापाराय विख्यात आसीत्। कश्मीरस्योत्तरपश्चिमभागो दर्ददेशनाम्ना विख्यातोऽस्ति। अस्य यातायातमार्गस्यैका महत्वपूर्णा शृङ्खलास्ति। कश्मीरस्य पूर्वे त्रिविष्टुपस्य (वर्तमान तिब्बतस्य) प्रदेशः। भाषा तथा सांस्कृतिकदृष्ट्या काश्मीरस्य पूर्वभाग अथवा ललाटाक्षः (वर्तमान लद्दाख) तिब्बतवन्मन्यते। विदुषां मतेन *लद्दाखस्य* प्राचीनं नाम *ललाटाक्ष* आसीत् यदुल्लेखो महाभारते लभ्यते।

कश्मीरस्य दक्षिणप्रदेशो जम्बू (वर्तमान जम्मू) नाम्ना सुविश्रुतः यस्तु मद्रदेशान्तर्गतः पुरा आसीत्। पुरा पश्चिमोत्तरीयाः पर्णोत्सदार्वाभिसारादयः काश्मीरिकाः सीमाभूता उपखण्डा

1. संपादकः डॉ. मण्डनमिश्रः, *विश्व संस्कृत शताब्दी ग्रन्थः* जम्मू व कश्मीर राज्यभागः। पृ.-336।

आसन् ये अधुनापि, आंशिकरूपेण काश्मीरेणैव सह सम्मिलिताः सन्ति। ये पर्णोत्सा (वर्तमान पुंछ) कथ्यन्ते। एतदीय एको भागो अभिसारः 'हज़ारा' इति नाम्ना प्रसिद्धोऽस्ति यस्तु ब्रिटिशसाम्राज्यायत आसीत्, अधुना पाकिस्तानान्तर्गतो वर्तते।

सिन्धुः कश्मीरोपत्यकायां प्रवहति। दर्ददेशं प्राप्य सा दार्दी इतिमन्यते। अतः सा 'दार्दी' इतिनाम्ना संस्कृतसाहित्ये प्रसिद्धा। वितस्ता कश्मीरस्योपत्यकायां सुन्दरतमा नदी अस्ति। पर्वतावृतस्य कश्मीरमण्डलस्य द्रोण्याः मध्ये कश्मीरस्य उल्लोल (वर्तमान-बुलर) नाम सरोऽस्ति। यदस्योपत्यकायाः जलधारान् आत्मसात्कृत्य महत्वपूर्णं कार्यं विदधाति।

### वर्तमानसीमा

जम्मू कलव व कश्मीरराज्यं जम्मू कश्मीरलद्दाख तथा गिलगत्तप्रदेशान्तर्गतं मन्यते। इदं भारतीयगणतंत्रस्यैकमुत्तरीयराज्यम्। अस्य[1] राज्यस्य पार्वत्यक्षेत्रं 1947 ईस्व्याः पूर्वं 222797. 4194 किलोमीटरमासीत् जम्मू[2] व कश्मीरस्य राज्यमुतरतश्चीनरूसीतुर्किस्तानाभ्यामावृतं, पूर्वस्यां दिशि चीनतिब्बताभ्यामावृतं, दक्षिणदिशि पंजाबेन, पश्चिमदिशि पाकिस्तानस्योत्तर-पश्चिमसीमा-प्रान्तावृतमस्ति। अस्य सीमासु (Borders) रूसचीनाफगानिस्तानतथापाकिस्तानदेशाः गणतंत्रभारतस्थ सीमानिकटे वर्तन्ते। एशियामानचित्रे इदं राज्यं गणतंत्रभारतस्योतरतो मुकुटवत् राजते। कश्मीरस्योपत्यका पीरपंजालतथा हिम्राद्रिमध्ये चष्पकमिव प्रतिभाति।

[3]पाकिस्तानस्याक्रमणेनास्य राज्यस्य सीमाः 1947 ईस्व्यां परिवर्तिताः। 1948 ईस्व्यां जम्मू व कश्मीरराज्यस्य सीमा युद्धविरामरेखया खंडिताः, यदा 83787.9 किलोमीटरराज्यसीमा (Territory) पाकिस्तानेन बलात् स्वायत्ती कृता तथा विजयानन्तरं 138, 992.1 sq. वर्गमील-किलोमीटरा भारते अन्तर्गताः। अनेनास्य देशस्य विस्तारः पूवपिक्षया संकुचितोऽभवत्।

[4]गणतंत्रचीनदेशेन 1962 ईस्व्यामक्टूबरमासे लद्दाखे आक्रमणं कृतम्। फलतो लद्दाखे 6474.9375 एतावन्मात्रकिलोमीटरप्रदेशान् भारतीयराज्यसीमायाः बलादपहृत्य स्वाधिकारे नीताः। अतो लद्दाखस्य महत् क्षेत्रं चीनदेशेन स्वात्मसात् कृतम्।

### प्रदेशविभागः

कश्मीरराज्ये दक्षिणतो जम्बूविभागः, उत्तरतो ललाटाक्ष (लद्दाख) विभागः, बलत्तिस्तानं, दर्दिस्तानं, गुरेस, सुख, जांस्करः, कश्मीरोपत्यकाः, अन्येऽपि केचन विभागाः सन्ति। मुख्यत अस्य त्रयो विभागाः—ये (1) जम्मू (2) कश्मीर (3) लद्दाखा इति नामभिः प्रसिद्धाः।[5] प्राचीनकालात् कश्मीरस्योपत्यका विशालखण्डद्वयेषु विभक्तासीत्।

---

1. A. N. Raina-*Geography of Jammu & Kashmir*, P. 9
2. Ibid. P. 9-10
3. A. N. Raina-*Geography of Jammu & Kashmir*. P. 11
4. Ibid. P. 11
5. Suresh *Chandra Banerjee, Cultural Heritage of Kashmir*, P. 5

कमराज (संस्कृते-क्रमराज्यं) तथा मराज़श्च (संस्कृते-भड़वराज्यं) प्रत्येको खण्डो विभिन्नविषयेषु (परकणेषु) विभक्तमासीत्। [1]पुराणानुसारं काश्मीरिका उत्तरराष्ट्रान्तर्गताः।

### जनसंख्या

1921 ईस्व्यां संभूतस्य जनगणनानुसारं कश्मीरीपण्डितानां संख्या :

| | | | | |
|---|---|---|---|---|
| त्रीनगरे | — | 21635 | पुरुषः | स्त्रियः |
| ग्रामे | — | 33417 | 30944 | 24108 |

जम्मू व कश्मीरराज्यस्य जनसंख्या 1971 ईस्व्यां सम्भूतस्य जनगणनाविवरणस्यानुसारं 4616632 परिमितासीत्। (पुरुषाः 2458325 तथा स्त्रियः 2158317 परिमिता आसन्)।

1981 ईस्व्यां सम्भूतस्य जनगणनाविवरणस्यानुसरेण जम्मूकश्मीरराज्यस्य जनगणना 5954010 परिमितास्ति। अस्यां जनगणनायां पुरुषाणां संख्या 3134581 परिमितास्ति तथा स्त्रीणां संख्या 2819492 परिमिता।

शिक्षितानां वर्गः पुरुषः—35.49 प्रतिशतम्।
स्त्रियः—15.82 प्रतिशतम्।

### पर्वतमालाः

काश्मीरमण्डलं सर्वतः पर्वतमालाभिरावृतम्। अस्य हिमाच्छादितानि गगनचुम्बीनि, ऊर्ध्वशिखराणि रजतपट्टवत्, शोभन्ते। श्रीनगरस्य पूर्वस्यां दिशि श्रीशंकराचार्यपर्वतो, दक्षिणस्यां दिशि शारिकापर्वत, उत्तरस्यां दिशि हरमुकुटाख्यपर्वतः 16015 पादभितः (फुटकः) उच्चोऽस्ति।

### क्षेत्राणि

कश्मीरे पहलगामुगुलमर्गुसोनामर्गखिलनमर्गुयूसमर्ग, प्रभृतीनि कानिचन क्षेत्राण्यतीव मनोहराणि सन्ति। तेषु ग्रीष्मकाले विभिन्नदेशेभ्यः पर्यटका आगत्य जीवनस्यामूल्यानि क्षणानि यापयन्ति। हिमानि क्षेत्राणि भारतवर्षे प्रसिद्धानि सन्ति।

### नद्यः

[2]जम्मूप्रदेशे निम्ननद्यः प्रसिद्धाः सन्ति :

| | |
|---|---|
| रावी | सरांसि : |
| उझ | मानसरः |
| तवी | सुरीनसरः |
| चिनाब | सनासरः |

1. वायुपुराणं 14 विष्णुपुराणं 4 पृ. 24, 28 आदयः।
2. A. N. Raina-*Geography of Jammu & Kashmir*. P. 37

| | | |
|---|---|---|
| [1]लद्दाखे | नद्यः | सरांसि |
| | सिदं | पंगोग |
| | श्योक | तसोमुरीरी |
| | जसंकार | |
| | यारकंद | |
| [2]कश्मीरप्रदेशे | सरांसि | तडागाः |
| | डलः (दलम्) | *वेरीनागः (वेरीन्नगः)* |
| | आंचारः | कुक्करनागः |
| | होकरसरः | अच्छबलनागः |
| | मानसबलं | मार्तण्डनागः |
| | बुलरः (उल्लोलः) | चश्माशाहीनागः |
| | कौंसरनागः | बैहमानागः |
| | गंगबलं | तुलमुल्लानागः |
| | तारसरः, मारसरः | सुखनागः |
| | शेषनागः | दुःखनागः |
| | अनन्तनागः | ज्वालामुखीनागः |
| | भट्टन-नागादयः | नीलनागादयः |

वितस्ता, लिदर, विशव, रंब्ययार, दूदगंगा, सिंद, फेरोज़पुरनालादयोऽत्र वहन्ति। आसु नदीषु वितस्ता प्रधाना नदी, अस्ति।[2] नीलमतपुराणानुसारं वितस्ताया उत्पत्तिर्भगवतः श्रीशंकरस्य नीलनागस्य पार्श्वे स्वत्रिशूलक्षेपणेन समुद्भूता। वितस्तिरिति शब्दस्यार्थो छादशाङ्गुलिरस्ति। अनेनैव कारणेनास्य नाम वितस्तास्ति। वितस्तायाः वर्णनं वेदेषु[4] पुराणेषु वितस्तामहात्म्ये[5] राजतरङ्गिणी, इत्यादि ग्रन्थेष्यूपलभ्यते। वेरीनागान्निसृत्येयं मुज़फराबादनगरस्याधस्तात् कृष्णगंगया सह प्रवहति। कश्मीरे अनेकाभिः सरद्भिः सह संमिल्य इयं मुजफराबादाधस्यात् पाकिस्तानसीमायां प्रविश्य महासागरे प्रविशति। प्राचीनकाले वितस्तायामेव नाकैया यातायातं भवतिस्म।

## सेतवः

संप्रत्युपत्यकामध्ये वितस्तायां बहवः सेतवः सन्ति ये पूर्वपश्चिमू-दक्षिणोत्तरप्रान्तान् परस्परं संमेलयन्ति तथा कश्मीरस्येकतापादने साहायमादधति। कश्मीरीभाषायां 'सेतुः' कदलनाम्

1. A. N. Raina-*Geography of Jammu & Kashmir*. P. 37 P. 37
2. Ibid. P. 37
3. तस्यानाम वितस्तेति कृतवान् शंकरः स्वयम्।
   वितस्तिमात्रं गर्तं तु शूलेन कृतवान् हरः॥ डॉ. वेदकुमारी—*नीलमतपुराण*, श्लोकः 260
4. इयं मे गङ्गे यमुने सरस्वति शतुद्रिस्तोमं सचता परुष्णया।
   असिक्नया मरुद्वृधे वितस्तयाऽऽर्जाकीये शृणुह्या सुषोमया॥
5. यतो देवी भगवती वितस्ता पापनाशिनी।
   निःसारिता महादेव त्वयाभक्तहितेप्सया। *वितस्तामाहात्म्यम्*, पृ. 1

नोच्चार्यते।[1] सर्वप्रथमं श्रीनगरे यवनशासकस्य जैन उल्लाब्दीनस्य काले वितस्तायां काष्ठप्रस्तरकदलस्य निर्माणं सम्भूतम् यत्तु तत्स्मृत्या मयापि जैनकदलनाम्ना प्रसिद्धम्। अनन्तरं तदुत्तराधिकारिभिः फतेहकदल, आलीकदल, हब्बाकदलादीनि निर्मापितान्यभूवन्। स्वतंत्रतायाः पूर्वं (1947 ई. पू.) केवलं 'सप्तसेतवः' आसन्। अधुना यातायातादिनिमित्तं सेतूनां निर्माणं योजनान्तर्गतं नियमबद्धं वर्तते। एषु सेतुषु इमे मुख्यतमाः सन्तिः—अमीराकदल (2) बडशाहकदल (3) हब्बाकदल (4) फतेहकदल (5) जैनकदल (6) अल्यकदलप्रभृतयः।

## सरांसि

काश्मीरे अनेकानि सरांसि सन्ति तेषु झीलडलनाभसरः श्रीनगरयाँ शंकराचार्यस्य पादमूले वर्तते इदं सरः पद्मदलावृतमतिमनोहारि। लघ्वीभिर्नावभि-बृहतीभिर्नौकाभिरस्य शोभाद्विगुणिता भवति। शैवलावृतमिदं सरः। 'डल'[2] शब्दस्य प्रयोगः सर्वप्रथममितिहासकर्त्रा श्रीवरेण राजतरङ्गिण्यां कृतोऽस्ति। आचारनाम द्वितीयं सरोऽस्ति। एतद् श्रीनगरस्योत्तरपूर्वकोणे क्रोशार्धदूरं वर्तते। अस्य विशालता सार्धद्विक्रोशपरिमितास्ति। तृतीयं मानसबलनाम सरः। इदं वितस्तायाः दक्षिणतीरे वर्तते। काश्मीरे एतत्समानं स्वच्छं सरो न दृश्यते। अस्य वर्णनं कल्हणपण्डितेन (द्वादशशताव्दयाः) राजतरङ्गिण्यामकारि चतुर्थमुल्लोल (वुलर) नाम सरोऽस्ति। नेदं कश्मीरपूज्यस्यैव विशालं महत्सर अपितु समस्तस्यैशियाखण्डस्य वर्तते। श्रूयते प्राचीनकाले अत्र सिन्धुमन्नामनगरमासीत् यत्तु जलविप्लवेन जले निमग्नम्। अस्यावशेषा जले दरीदृश्यन्ते। उल्लोल[3] सरसो वर्णनं जौनराजतरङ्गिण्यामुपलभ्यते। राजतरङ्गिण्यामस्य सरसोनाम महापद्मसरोऽस्ति।

## उद्यानानि

अत्रत्येषूद्यानेषु चश्माशाही, निशातशालमारोद्यानानि प्रसिद्धानि सन्ति। शालमारस्य प्राचीनं नाम 'मारशाला'[5] इत्यासीत्। वितस्तामाहात्म्येनैतज्ज्ञायते। इमानि सर्वाण्युद्यानानि पद्मसरसः (वर्तमानझीलड़लस्य) तटे स्थापितानि सन्ति। मुगलसम्राड्भ्यां जहांगीरशाहजहांभ्यां शालमारनिशातोद्याने निर्मापिते। तत्र भवता जहांगीरेण शालमारस्याधारशिला 1619 ईस्व्यामत्र स्थापिता। शाहिजहांनेन 1933 ईस्व्याम्। एतेषां प्राचीनानामुद्यानानां जीर्णोद्धारादिरूपेण

---

1. Dr. R. K. Parmu-*History of Muslim Rule in Kashmir*. P. 445
2. लोके 'डल' इतिख्यातं यदगाधं सरोवरम्।
   तस्य प्रतिष्ठा प्रस्तावाद् वर्णनं क्रियते मनाक्॥
   श्रीकण्डकौलः-श्रीवरकृता-*जैनराजतरङ्गिणी*, पृ. 62
3. उल्लोलसरसो मध्ये वर्तमाने महास्थले।
   पवित्रे विजने चात्र सिद्धिं यास्यन्ति साधकाः॥
   श्रीकण्ठकौलः-*जौनराज-राजतरङ्गिणी*, श्लोक 939
4. प्राकरोत्तत्र वै शालां मारेण सुरसुन्दरि।
   तदाप्रभृति तत्स्थानं 'मारशालेति' कथ्यते॥ *वितस्तामाहात्म्यम्* अप्रकाशित,
   वर्णविपर्यत्वाद्, शालमारेति संज्ञः॥ जम्मू व कश्मीर रिसर्च विभाग, पृ. 90

तत्रभवता मुगलसम्राजा जहांगीरेण नवता प्रतिपादिता। अत इमानि मुगलोद्यानानि, अधुना संभाषन्ते।

**पशुपक्षिणः**

अत्र प्राचुर्येण चटकाः, शारिकाः, काकाः गृद्धाः, कपोता उपलभ्यन्ते। पशुषु ऋक्षाणां संख्याधिकास्ति। सिंहानां संख्या कश्मीरे स्वल्पैव। त्रालग्रामे सूकरा अपि दृश्यन्ते। वनेषु मृगाः, लभ्यन्ते। वृकाः, गावः, वृषभाः, गर्दभाः, लोपाकाः, शृगालाः, वानराश्च काश्मीरेषु बाहुल्येन सन्ति। उदबिडालाः ग्रामे ग्रामे भवन्ति। एतदतिरिक्तं मेषाः बृहत्कायाः, छागला अप्यवलोक्यन्ते।

**जलवायवः**

जलवायुदृष्ट्या कश्मीरमण्डलं सर्वस्मिन् विश्वे सर्वोत्कृष्टमस्ति। अत्रत्यं जलं स्फटिकवन्निर्मलं स्वच्छञ्चास्ति। अत्रत्या वायवः शीतप्रदाः स्वास्थ्यप्रदाश्च सन्ति। अत्रत्यानां तडागानां जलं ग्रीष्मऋतौ शीतं वर्षर्तौ घर्मं भवति।

**कृषिः**

देशोऽयं कृषिप्रधानः। अत्रत्या अशीतिप्रतिशतपरिमिताः जनाः ग्रामवासिनः। ते तु अधिकरूपेण कृषिकर्मपरायणाः सन्ति। अत्रत्या कृषका प्राचुर्येण धान्यं वपन्ति गौधूमादीनां सस्यानामुत्पत्तिः सामान्या। जम्मूपुर्यामधिकरूपेण कृषका गौधूममुत्पादयन्ति भूम्याः शुष्कत्वात्। कश्मीरे जनास्तण्डुलं भक्षयन्ति न तु जम्मूप्रदेशवदपूपिकां खादन्ति। अत्र धान्यं प्रधानं खाद्यमस्ति। काश्मीरे सर्वप्रकाराणि सस्यान्युपलभ्यन्ते। शाकेषु वङ्गनाः, मूलपत्राणि, (मूलवन्य इति कश्मीरी भाषायाम्) आलुकाः ष्यन्दाः, स्वर्चलाः, नदरू, शिम्बाः, करेलाः उपलशाकाः, अलाबु इत्यादयो भवन्ति। फलेषु चूंठफलानि, गिलासाफलानि, चिराफलानि, वातादानि, अक्षोटानि, आडुकानि द्राक्षाप्रभृतीनिफलानि सन्ति।

**ऋतुपरिवर्तनम्**

कश्मीरे ऋतुपरिवर्तनमतीव मनोहारि। अत्र द्वाभ्यां मासाभ्यामेकः ऋतुर्भवति। अत्र षड्ऋतवः सन्ति, येषु वसन्तग्रीष्मवर्षाशरदहेमन्तशिराभिधाना ऋतवः प्रसिद्धा भवन्ति। वसन्तकाले विविधपुष्पाणि वृक्षाः, लताश्च विकसन्ति। सर्वत्र हरिद्वर्णाभा दृश्यते। वनानि, उद्यानानि, वाटिकाश्च कश्मीरस्य सौन्दर्यं वर्धयन्ति। शरत्काले वृक्षेभ्यो लताभ्यः पत्राणि पतन्ति। भवानी-वृक्षस्य (बून्य इति कश्मीरीभाषायां) अथवा 'चिनार' वृक्षस्य पत्राण्यस्मिन् काले शैनः शनैः रक्तवर्णानि भवन्ति। शरदान्ते पत्राणि मन्दं मन्दं पतन्ति। सर्वे पादपाः पूर्णरूपेण नग्ना दृश्यन्ते। हेमन्तकाले मेघस्य नाशः पूर्णरूपेण भवति। शिशरकाले शैत्यस्य प्रादुर्भावो भवति। अस्मिन् काले सर्वत्र शीतलहरी, अनुभूयते हिमपातोऽपि भवति। गगनचुम्बीनि हिमाच्छादितानि पर्वतशिखराणि, अतीव सुन्दराणि दृश्यन्ते। हिमावृताः गृहाणां छदाः श्वेतदुकूलावृता इव

राजन्ते। शिशिरघंटापि छदान्तेषु दृष्टिगोचरी भवति। लोकाः काष्ठाङ्गारिकां (कांगर इति क. भाषायां) शैत्योपशमाय धारयन्ति। प्राचीनकालाल्लोका अत्र काष्ठाङ्गारिकां सेवन्ते। अस्या वर्णनं काव्यशास्त्रमर्मज्ञेन काश्मीरिकविदुषा मङ्खकविना (द्वादशशताब्दयाः) 'श्रीकण्ठचरिते' कृतमस्ति[1]।

प्रायः शिशरकाले यातायातसाधनानि स्थगितानि भवन्ति हिमपातनात्। लोकाः शुष्कशाकमत्स्यादिकं भक्षयन्ति। अहोरात्रं जना अग्निं निषेवन्ते।

**धर्मः**

कश्मीरे हिन्दुमुस्लिमसिक्खबौद्धधर्मावलम्बिनो लोका निवसन्ति। स्वधर्मपालने सर्वे स्वतंत्राः। प्राचीनेतिहासस्याध्ययनेन ज्ञायते यत् चतुर्दशशताब्दीं यावदत्र सर्वे हिन्दव आसन्। अस्यां शताब्द्यां यदा यवनधर्मानुयायिन अर्यणात् (वर्तमान ईरानात्) अत्रागता स्ते अत्र मुस्लिमधर्मस्य प्रचारं चक्रुः। सिकन्दरबुतशिकनेन[2] (1389-1413 ई.) अत्रत्यानि मन्दिराणि भूमिसात्कृतानि। अस्योल्लेखौ जौनराजस्य राजतरङ्गिण्यामपि प्राप्यते। पश्चात्[3] तुर्किस्तानादागतेन चंगेजखानस्योत्तराधिकारिणा जुलकदरखानेन (1322 ईस्व्यां) सप्ततिसहस्र (70000) अश्वारोहभिः सह कश्मीरमण्डलं समाक्रान्तम्। अत्रागत्य जैन हिन्दवो बलान्मुस्लिमधर्मे परिवर्तिताः। प्रत्यावर्तनकाले स पञ्चाशतसहस्र (50000) परिमितान् क्रीतदासान् ब्राह्मणान् स्वात्मना सह नीत्वा मार्गे एव झंझावातप्रकोपेन पञ्चत्वं गतः। इत्थमेव सिकन्दरोऽपि हिन्दुभिः सह दुर्व्यवहारं विधाय तान् यवनधर्मदीक्षितान् चकार। अनेनैव कारणेन संप्रति बहुसंख्यकरूपेण मुस्लिमाः कश्मीरे लभ्यन्ते। संप्रत्यपि यवनदेवालयानां मित्तिषु मूर्तिमयाः प्रस्तरखण्डाः दृश्यन्ते। बौद्धधर्मस्य काले ये बौद्धविहारा आसन् तेऽपि, एभिर्यवनै र्खण्डिताः। इदानीं तेषां भग्नावशेषा यत्र तत्र लभ्यन्ते। मार्तण्डस्य, अवन्तिपुरस्य, त्रापुरस्यावशेषाः, शताब्दीनामनन्तरमपि लक्ष्यन्ते। अत्रत्या ब्राह्मणाः शाक्तोपासकाः सन्ति। अनेनैव हेतुनात्र शाक्तोपासकाः प्रागैतिहासिकदेवालया दृश्यन्ते यथा–तेषु कुलवागीश्वरे ग्रामे (वर्तमानकुलगाम) त्रिपुरसुन्दर्याः, अनन्तनागे त्रिसन्ध्यायाः पुलगामे ज्वालामुख्याः, श्रीनगरे शारिकायाः, टीटवाले शारदायाः, गांधर्वबले (गांदरबल) राइयाः, वराहमूले (वरमुल) शैलापुत्र्याः सन्ति।

---

1. हिमागमे यत्र गृहेषु योषितां ज्वलद्बहुछिद्रसखी हसन्तिका।
   विभाति जेतुं मदनेन शूलिनं धृताततिर्वह्निमयीव चक्षुषाम्॥
   काव्यमाला-श्रीकण्ठचरितम्, सृ. स. श्लो. 29
2. मार्तण्डविजयेशान चक्रभृत्त्रिपुरेश्वराः
   मग्ना येनास्य को विघ्नाः शेषमङ्गेन कथ्यते।
   श्रीकण्ठकौल-जोनराजकृता-राजतरङ्गिणी, श्लो. 601
   सुरेश्वरीवराहादिप्रतिमाभङ्गकर्मणि अकम्पतभियैवोर्वीनास्य सवङ्कषा तु भीः॥
   तदेव 602
3. Pandit Anand Koul–The Kashmiri Pandit. P. 44

अत्र मुस्लिमजातौ शियासुन्नीनामके द्वे जाती स्तः। सुन्नीमुस्लिमानां संख्यात्राधिकास्ति। बौद्धानां प्राय अभाव एव। सिक्खानामपि न्यूना संख्या दृश्यते। बौद्धधर्मस्य प्रभावो लोकानामाचरणे स्पष्टरूपेण ज्ञायते।

### जातयः

[1]कश्मीरी ब्राह्मणाः 199 गोत्रेषु विभक्ताः। प्रत्येकः सदस्यः ऋषिजः। एषु मुख्यगोत्राणीमानि सन्ति—दत्तात्रेयः, भारद्वाजः, पालदेवः, औपमन्यवः, मौद्गल्यः, धौम्यायनः, भवकापिष्ठलः, स्वामिन् वार्ष्यगण, इतिप्रभृतयः।

ब्राह्मणानां मुख्यजातय—राजानकः (राज़दान / रैणा) कौलाः, भट्टाः, पण्डिताः, कल्लाः, दरा इत्यादयः सन्ति।

[2]'कश्मीरीपण्डिताः श्रेष्ठार्यजातिषु गण्यन्ते', इति सर मोनियर विलयमस्य मतम्।

### भाषा

कश्मीरे सर्वे जनाः कश्मीरीभाषायां स्वकीयान् भावान् प्रकटयन्ति। यतस्तेषां मातृभाषा कश्मीरी अस्ति। संविधानानुसारमत्र, उर्दूभाषा राज्यभाषास्ति। हिन्दीसम्पर्कभाषा। अंग्रेज़ी अन्तर्राष्ट्रियभाषारूपेणात्रशिक्षाधिकारिभिः स्वीकृता। चतुर्दशशताब्दीं यावत् कश्मीरस्य सर्वं साहित्यं शारदालिप्यां लिखितमासीत् न तु पारसीलिप्याम्। यवनानां शासनकाले संस्कृतस्य स्थानं पारसीभाषाया गृहीतम्। चतुर्दशशताब्द्यनन्तरं कश्मीरीभाषायाः साहित्यं प्राचुर्येण पारसीलिप्यां लिखितमस्ति। संप्रत्यस्यां भाषायामनेके अरबीफारसी भाषाशब्दाः सन्ति। इदानीं कश्मीरीभाषायां षष्टिप्रतिशतशब्दाः संस्कृतस्य चत्वारिंशत् परिमिताः शब्दा अरबीफारसीभाषयो स्तथा विदेशीशब्दानां प्राचुर्यं लभ्यते। अस्याः प्रतीकचिह्नानि (Diacritical Marks) देवनागरीलिप्यां तथा फारसीलिप्यां शिक्षाविद्भिर्निर्धारितानि। 'अस्यां भाषायां[3] विश्वभाषाणामपेक्षायाधिकाः ध्वनयः स्वराश्च दृश्यन्ते' अपरासु भाषासु कश्मीरीभाषावत् ध्वनिवैशिष्ट्यम् नोपलभ्यते। इति केषांचन विदुषां मतम्। वस्तुतः कश्मीरीभाषा संस्कृतजा।

जम्मूप्रदेशस्य भाषा डोगरी अस्ति। डोगरी भाषार्थं तत्रत्यैर्विद्वद्भिर्देवनागरीलिपि र्निधारिता। डोगरीभाषाप्यार्यभाषायां गण्यते। लद्दाखेऽपि प्रारम्भिकी शिक्षा मौटभाषायां दीयते। अत्रत्या लिपिर्लद्दाखीअस्ति, या तिब्बत-वर्णमालातो निर्गतास्ति।

---

1. Pandit Anand Koul–The Kashmiri Pandit. P. 19-20
2. Modern India and the Indians. P. 151
3. अब्दुल अहद आज़ाद, कश्मीरी ज़बान और शायर (प्रथम भाग) (उर्दू में), पृ. 28

# वर्तमानपरिप्रेक्ष्ये धर्म एव हि रक्षकः

हिमांशुशेखरः

'धृञ्धातोः' निष्पन्नस्य धर्मस्य अर्थस्य आयामः न ह्रस्वः, प्रत्युत् अतिव्यापको वर्तते। 'मजहब', 'रिलीजनः', 'दीन' प्रभृतयः शब्दाः धर्मस्य पर्यायवाचिनः भवितुं न शक्नुवन्ति यतः भारतीयदर्शने प्रत्युक्तो धर्मो हि अतिशयेन उदात्तं तत्त्वम्। वेदाः, ब्राह्मणानि, आरण्यकानि, उपनिषदः, श्रौतसूत्राणि, प्रातिशाख्यानि, अनुक्रमणिकाः, वेदाङ्गानि, निरूक्तं, शिक्षाः, कल्पः, ज्योतिषं, व्याकरणम्, आयुर्वेदः, धनुर्वेदः, इतिहासः, पुराणानि, स्मृतयः, तन्त्राणि एतेसु यत् सार्वभौमशाश्वतं च सत्यम् उद्घाटितम् तद एव धर्मः।

'धर्मो जगतः प्रतिष्ठा' एषः एव धर्मस्य अभिप्रेतः अर्थः। प्रकारान्तरेण महाभारतनामके पञ्चमवेदे 'धारणतत्त्वं' प्रकीर्तितम्। कथयति भगवान् श्रीकृष्णः अर्जुनं प्रति 'धारणाद्धर्म इत्याहुः धर्मो धारयते प्रजाः। यत् स्याद्धारण-संयुक्तं स धर्म इति निश्चयः। वैशेषिकदर्शने उदीरितं—'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म।'

यतोऽभ्युदयनिःश्रेयससिद्धिः स एव धर्मः धर्मस्य प्रामाणिकम् अनुभूतं च महनीयं तत्त्वम् इति। 'धारणाद्धर्मः', 'धारयति इति धर्मः', 'ध्रियते अनेन इति धर्मः' अद्रोहोप्यलोभश्च दमो भूतदया तपः ब्रह्मचर्यं सत्यमनुक्रोधः क्षमा धृतिः इत्यादयोऽपि सार्वकालिक-सार्वभौमधर्मस्य मूलप्रकृतयः।

अधुना धर्मसम्बन्धे अतिभ्रामिकाधारणा प्रचलिता। धर्मस्य सूक्ष्मस्वरूपं दुर्ज्ञेयम्। इदानीं धर्मस्य आश्रये बहूनि दुष्कर्माणि भवन्ति। अखिलविश्वे एकादशप्रामाणिकाः धर्माः वर्तन्ते। तेषां निम्नांकितनामानि सन्ति—

(1) हिन्दू-धर्मः, (2) इस्लामः, (3) ईसाई-धर्मः, (4) बौद्ध-धर्मः, (5) जैन-धर्मः, (6) जापानस्य शिन्तो-धर्मः, (7) ताओ धर्मः, (8) केन्फ्यूशिय-सानुमोदित-धर्मः, (9) सिक्ख-धर्मः, (10) पारसीक-धर्मः, तथा (11) यहूदी-धर्मः। एतस्मिन् मध्ये नैको धर्मः यः दुष्कर्मं प्रशंसति। सर्वे एव सन्मार्गं दर्शयन्ति येन गत्वा मानवः स्वकीये जीवने भद्राणि प्राप्नुवन्ति। सर्वे धर्माः एकं परमं तत्त्वं हि उद्घाटयन्ति।

वेदान्तदर्शने इति संग्रहेण किन्तु स्पष्टरूपेण प्रकीर्तितं यत् ज्ञानो तत्त्वमेकम् अन्वेषयति, ज्ञानहीनाः तु मिथ्या-दृष्टिम् अवष्टभ्य धर्मस्य बाह्याडम्बरे भ्रमन्ति। उपनिषदि उक्तं—'गवाम् अनेकवर्णानाम् क्षीरस्य एकवर्णता क्षीरं पश्यति ज्ञानी लिङ्गं न तु गवां यथा।' वर्तमाने-काले अधिकाधिकजनाः येन केन प्रकारेण अर्थार्जने निमग्नाः। ते चिन्तयन्ति यत् केवलं वित्तोपार्जनेन कृत्स्नं सुखं शान्तिं च प्राप्स्यामः। अर्थोऽनर्थस्य मूलम्। एके मनीषिणः इति प्राहुः। भगवान् शिवः पार्वतीं प्रति कथयति—

'अर्थवन्तं नरं नित्यं पञ्चाभिघ्नन्ति शत्रवः।
राजा चोरश्च दायादा भूतानि क्षय एव च।
अर्थमेवमनर्थस्य मूलमित्यवधारय।
अर्थानामर्जने दुःखमर्जितानां तु रक्षणे।
नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम्।'

कामाचारः खलु आत्मानं विनाशमार्गे नयति। अद्यत्वे अखिलविश्वे कामः अबाधगत्या वर्धमानः अस्ति।

हिन्दूधर्मस्य आदिप्रवक्ता मनुः कथयति—'धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या, सत्यमक्रोधो दशकं धर्मलक्षणम्।'

देवर्षिनारदः परिव्राजकोपनिषदि अपि धर्मस्य एतानि एव लक्षणानि वर्णयति। शतपथे ब्राह्मणे उक्तं यत् 'यद्वै मनुरवदत् तद् मेषजं मेषजतायाः।' पुरातनभारतीयमनीषिणः चित्तवृत्तिनिरोधं परमावश्यकं मन्यन्ते स्म। 'तेन त्यक्तेनं भुञ्जीथाः' इति धर्मः, न तु 'संयोगात् समाधिः।' विषयासक्तानां मानवानां न केवलं आचारहीनता अपितु तेषां दया, लज्जा, तेजः आदि सद्गुणाः स्वयमेव उत्साद्यन्ते। इदानीम् आर्यावर्ते धर्मनिरपेक्षतायाः प्रभूतः प्रचारः क्रियते। अनेन दुष्प्रचारेण अधिकाधिकजनाः शीलभ्रष्टाः जाताः। कुले, समाजे, राष्ट्रे च चरित्रहीनता निरन्तरम् अबाधगत्या वर्धते।

सेक्यूलरवादस्य अन्धसमर्थकस्य धर्मं प्रति द्रोहः अनया वार्तया स्पष्टः यत् ते पाठ्यपुस्तकतः 'गणेश' इति शब्दं निस्सार्य तत्स्थाने 'गर्दभ' शब्दं रक्षितवन्तः। इयं मिथ्या धारणा यत् धर्मः विज्ञानस्य विशुद्धः अस्ति। एतत्सन्दर्भे विश्वविश्रुतः वैज्ञानिकः अलबर्ट आइन्स्टाइनस्य उक्तिः विचारणीया। स कथयति "धर्मेण विना विज्ञानं पङ्गु तथा विज्ञानं विना धर्मः नेत्रहीनो भवति।"

इति अस्माकं पावनः कर्त्तव्यः यत् वयं धर्माय एव जीवनं सुप्रतिष्ठं कुर्याम।

---

*कथा...*

# निर्णयन्तु भवन्त एव

## कलानाथशास्त्री

धमगन्त्री[1] यथैव मोहनपुरस्थात्रे[2] शनैः शनैरुनगतिका भूत्वा निश्चला समभत्, मम निद्राऽभज्यत। प्रत्यूषसमयोऽयमभूत्। कतममिदं स्थात्रम्? वातानुकूलशयनयानकक्षे सम्पूर्णामपि रात्रिं निद्राणेन मया नाऽवबुद्धं कियान् मार्गो धूमगन्त्र्या लंछितः, कियाश्चावशिष्यते। सर्वतः काचपिहितबातायने वातानुकूलकक्षे बहिर्दृश्यं मनागपि न भवति नयनगोचरमिति खिद्यमानेन मयोत्थाय बहिरागत्य वीक्षितं, तदैवाऽहमजानां यदिदं स्थात्रं (स्टेशन) मोहनपुराख्यमस्ति। किन्तु परतो यात्रिवाटे जनानां संमर्दं वीक्ष्य कौतूहलं मे समपद्यत। किं द्रष्टुं जनास्तत्रैकत्र स्थिताः सांकुल्यमुत्पादयन्ति? अहमपि त्वरितं प्रधाव्य जिज्ञासां शमयितुं जनान् परतः प्रतोदयन् संमर्दे प्राविशम्। दृष्ट्वैव च स्तब्धोऽभूवं यत्तत्रैकः शवः श्वेतवस्त्रावृतो भूमौ स्थापितोऽभूत्। जनान् पृष्ट्वाऽहं ज्ञानुमपारयं यदद्य प्रातरेव यथैव हावडाएक्सप्रेसाख्या धूमगंत्री स्थात्रेऽस्मिन् समायाता, अस्मिन्नेव स्थात्रे समापितयात्रं कक्षद्वयं (कम्पार्टमेंट) मुख्यगंत्रीतो वियोजितं व्यधीयत। यदा च सर्वे यात्रिणेऽवतीर्णाः, तदनन्तरं पश्चवाटं (याडे) प्रति नीतं तत् कक्षद्वयम्। यदा च स्वच्छकारास्तस्य संमार्जनायान्तः प्राविशन्, तैर्दृष्टं यदेको यात्री तदापि कक्षे तस्मिन् शायिकोपरि सुप्तोऽभूत्। तं जागरयितुं यदा ते तारस्वरेणाऽऽकारितवन्तः, न किमप्युत्तरमधिगतम्। यदा गात्रेषु स्पृष्ट्वा ते तमुत्थापयितुं प्रायतन्त, तदा तैरवगतं यत्स तु पञ्चत्वं प्राप्तः। सर्वत्र दावाग्निरिव समाचारोऽयं प्रसारत्। स्थात्राधीशः (स्टेशनमास्टर), अन्ये चाऽधिकारिणः समाकारिताः, शवस्य गात्रान्वेषणं कृत्वा तस्याभिज्ञानं क्रियमाणमासीत्। तदिदं दृश्यं वीक्षितुमेव जनास्तत्र समवायवीत्यहमजानाम्।

मम धूमशकटिर्गन्तुकामैव स्यादित्याशङ्कमानोऽहं यथैव जनसमूहात्तस्मात् परावर्तितुमैच्छं, तदैव शवस्य तस्य श्वेतवस्त्रच्छदमुद्घाटय किंचिद् वीक्षितुं रेलवेकर्मचारी कश्चन समुपाक्रमत। मयाऽपि त्वरितां दृष्टिरेका तत्र क्षिप्ता। किन्तु शवस्य मुखं दृष्ट्वैव विस्मयभराच्चीत्कारो मन्मुखान्निस्सरत्। अयं तु डॉ. कृष्णकान्त उपाध्यायोऽभूत्। मम भूतपूर्वः सहकृत्वा। विश्वविद्यालये आंग्लभाषाप्राध्यापकः। किमित्ययं स्थात्रेऽस्मिन् रेलकक्षे प्राणानत्यजत्, कुत्रायं गच्छन्नभूत्? किं नास्त्येतेन सह कश्चन्नपि परिवारजनः? डॉ. कृष्णकान्तेन सह प्राध्यापकपदमधितसुखो मम त्रिंशद् वर्षाणि व्यतीतानि, अहं विभागेऽन्यस्मिन् स्थानान्तरितोऽभूवम्, सोऽपि विश्वविद्यालयसेवां संपूर्य सेवानिवृत्तः संजात इति मया श्रुतमभूत्। एतस्मिन्नन्तराले किमघटतेति नाहमजानाम्। किन्तु तस्यैतस्य परिज्ञानस्य कृते मया यदि कियान् समयोऽत्र व्यतियापितस्तर्हि धूमशकटिर्मम पेटिकामादाय प्रस्थास्यते इत्यासीन्ममाशङ्का। चिरवियुक्तस्य सहकर्मणो दशामिमां

---

1. धूमगंत्री = रेलगाड़ी, ट्रेन।
2. स्थात्रम् = स्टेशन।

दृष्ट्वा तूर्णमेव निर्णीतं मया यदत्रैव मया मध्यविरामः (ब्रेकजर्नी) करिष्यते। परस्तादेवापरां धूमशकटिमारुह्य स्वेप्सितस्थलं प्रस्थास्ये। त्वरितं मया ममोपकरणानि यात्रिकक्षतोऽवातार्यन्त। रेलवेकर्मकरान् संसूच्य यात्राविरामं-स्वीकृतिर्लब्धा, डॉ. उपाध्यायस्य शवसमीपे स्थिता अधिकारिणश्च सूचिता यदहमेनं जनं जानामि। यद्येतस्याभिज्ञानं लिखितप्रमाणाद्यभावे दुर्लभं विभाव्यते भवद्भिस्तर्ह्यहं सहायतां कर्तुं शक्नोमि।

सौभाग्यवशात्तैः डॉ. उपाध्यायस्य वस्त्रपुटकात् (पॉकेट) तस्य दैनन्दिनी प्राप्ताऽभूत्। तस्याश्च तस्य गृहसंकेतः, दूरभाषक्रमाङ्कादि सर्वमधिगतमभूत्। सूचनाऽपि गृहजनेभ्यो दत्ताऽभूत्। तेषामागमनं प्रतीक्षितमभूत्। आगमनप्रतीक्षिषु जनेस्वहमाप्यात्मानं समयूयुजम्। किन्तु विलक्षं मम मानसं विविधेषूहापोहेषु निरन्तरं व्यापृतमासीत्। इदं तु स्पष्टमभूद्यदयं प्राध्यापकचर एकाक्येव यात्रां कुर्वाणोऽभूत्। इदमपि शवपरीक्षां कृतवद्भिर्व्यक्तिरैः सूचितमासीद् यन्मृत्योः कारणं हृदयावरोधोऽभूत्। एतस्य निष्कर्षोऽयमप्यभूद्यदयं हृद्रोगी आसीत्। तथापि किमित्येकाकिनाऽनेन यात्राऽनुष्ठिता? यात्राया मध्य एव सहसा हृदवरोधादयं प्राणानत्यजत्, मन्ये निद्राण एव दिवमारुरोह। सहयात्रिभिश्च सुप्तोऽयमस्तीति चिन्तयद्भिर्न विशेषतोऽवधानं प्रदं स्यात्। सर्वमिदं सहजानुमानं मन्मनसा विहितचरमभूदेव। हन्त, यद्ययं मनागपि प्राणानधारयिष्यत्, अहमस्य भूतपूर्वः सहकृत्वा कस्मिंश्चन चिकित्सालयेऽनेष्यमेनं, तत्र चिकित्साऽभविष्यत् सुलभा, तदैव च सर्वमतीतं वृत्तजातमहमज्ञास्यम्। किन्तु वराकोऽयं सहजस्वभावः सत्पुरुषो न किंचिदवोचन् कस्मादपि, एकाकी परदेशे दयनीयं, दारुणमिमं शरीरान्तं समाससाद। अहमस्मरं यत् प्रो. उपाध्यायस्यास्य कृते सर्वेऽपि सौजन्यमूर्तिः, सरलस्वभाव इत्यादि विशेषणानि प्रयुंजते स्म। मया त्वसकृदयं प्रशंसितोऽभूत् पद्यमिदमेतस्य वर्णनप्रसङ्गे समुद्धरता—

"वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः।
करणं परोपकरणं येषां, केषां न ते वन्द्याः?"

ते दिवसः स्मृतिपटले सहसा समस्फुरन्मे।

एवं विधो वन्द्यो जन एवं विधं दारुणमवसानं किमित्याप्नोत्! अयं तु दरिद्रोऽपि नाऽभूत्। सुसमृद्धोऽसावभूदिति सर्वेऽजानन्। भवनद्वयं विशालं तत्सवधेऽभूत्। एका मरुत्तरशकटिः (कार), दूरभाषः, सर्वमेव त्वासीत्तदन्तिके। इदमपि श्रुतमासीद् यत्तत्सुतेष्वेकस्तु चिकित्सकोऽस्ति यः कस्मिंश्चन विदेशे सुमहत्पदमधितिष्ठति, अन्यो निजव्यापारिणि समवाये (प्राइवेट कंपनी) कुत्रचनाधिशासी, कार्यपालको वाऽभूदित्यधुनाऽहमस्मरम्। अतः सर्वविधं सौभाग्यमयमुपभुंक्ते स्म। तथापि किमिदं संजातम्? कः खलु रहस्यमिदं प्रकटीकरिष्यति? एतस्य गृहजनेषु समायातेषु सर्वं प्रक्ष्यामीति चिन्तयन्नहमभूवं किन्तु दिवसो व्यत्यगात्, रात्रिः समायाता, न कश्चन समागतः। रेलवेकर्मचारिणस्तु मां तत्रावतीर्णं दृष्ट्वा सुमहत् सौविध्यमनुभवन्तः शवं निश्चिन्तभावेन मदभिरक्षायां विहाय स्वाच्छन्द्यमुपभोक्तुसारभन्त। अहं च पश्चात्तापवशगोऽचिन्तयं, "किमिति कष्टमिदं स्वशिरसि सर्वं विजानताऽपि मयोढम्?" अस्तु।

अपरस्मिन् दिवसे प्रातरेव कश्चित् सभ्यो जनः कर्मकरैः सह तत्रोपसर्पन्मयाऽवलोकितः। निकटे समायातेऽस्मिन्नहमवागच्छं यदस्याकृतिः परिचितेव प्रतिभाति। तदा तेनैव स्वकीयः

परिचयः मद्दत्तस्तदाऽहमस्मरं यदस्माकं भूतपूर्वश्छात्रः कौशिकोयमभूत्। डॉ. कृष्णकान्तोपाध्यायोऽपि तस्य गुरुरासीत्। स च कृष्णकान्तोपाध्यायस्य वर्तमानगृहस्य समीपे एव निवसन्नभूत्। स्वयमप्ययं विश्वविद्यालये प्राध्यापकोऽस्ति। स्वगुरोराकस्मिकं निधनं यात्रामध्ये स्थात्रोपरि जातं निशम्यायं त्वरितं प्रधान्याऽऽगतोऽभूत्। तेनैव परस्तात् सर्वं वृत्तजातं मह्यमसूच्यत यत् प्रो. उपाध्यायस्य निधनवार्ता यदा तद्गृहे प्राप्ता, तत्र न कोऽपि स्वजनोऽभूत्। एकः पुत्रस्तु विदेशेऽस्ति। अपरो गृहे निवसति किन्तु व्यापारकार्येण चेन्नै (मद्रास) नगरं गतोऽभूत्। अस्मिन् वारे तत्परिवारजना अपि सहैवगता अभूवन्। पत्नी पूर्वमेव स्वर्गमारूढवती। केवलमेको भृत्यो रक्षिरूपेण भवनेऽभूत्। तने प्रतिवेशित्वात् प्रो. कौशिकोऽयं सूचितो यदेवंविधा वार्ता समायाताऽस्ति। एतेन सर्वे गृहजना यत्र तत्र प्रवसन्तोऽभूवंस्तेभ्यस्तत्र तत्र सूचना प्रहिता किन्तु तेषामागमने समयस्तु लगत्येव। अतोऽन्तिमाय कर्मणे स्वयमयमत्र समायातोऽभूत्। किमधुना क्रियतामित्यावां द्वावपि परामृशाव। पर्यन्ते तदिदमेव निरधार्यत यच्छवस्य गृहान् प्रति नयनस्य प्रयत्नोऽकिञ्चित्कर एव सेत्स्यति, गृहजना अस्य कदा समागच्छेयुरिति कः खलु वेत्ति? तावदवधि शवोऽपि विकृतिमियात्।

अतस्तदैव आवाभ्यां शवस्यान्त्यपरीक्षाप्रतिवेदनस्य प्रतिर्गृहीता, पंचनामनं (पंचनामा) कारितम्, शवोऽधिगतः, तस्मिन्नेव दिने सविधि शवदाहो मोहनपुर एव व्यधायि। मयाऽग्रिमा यात्रा कर्तव्याऽभूत् कौशिकेनापि प्रतिनिवर्तितव्यमासीत्। अत आवां द्वावपि सन्तप्तहृदयौ, शोकाविद्धमानसौ वियुक्तौ। स्व. स्वगृहान् समायातौ। कौशिकस्तु मयाऽनुरुद्धो यत्परस्तात् किं संजातमिति स मह्यं पत्रेण सूक्षयेत्, यतो मम बलवती जिज्ञासा न तदापि शान्ताऽभूत्, भूयः प्रवृद्धतरा संजाता यदेतत् सर्वं निशम्य स्वर्गगतस्योपाध्यायस्य गृहजनाः किं व्यवस्यन्तीति। आवां प्रभूतसमयानन्तरं मिलितावभूतामिति द्वाभ्यामप्यन्योन्यस्य सङ्केतः, दूरभाषक्रमाङ्कादि गृहीतम्। अग्रिमयात्रायां निरन्तरमहं व्यचिन्तयं, मानवस्य कीदृशीयं दारुणा नियतिः। यद्विधिना ललाटे विलिखितं तदेव परिणमतेऽन्ततः। तन्मार्जितुं कः क्षमः। प्रो. उपाध्यायः सुसमृद्धः, प्रतिष्ठितानां पुत्राणां (प्रतिष्ठितयोः पुत्रयोः) पिता, एवमनाथवदपरिचिते स्थलेऽर्धपरिचितैर्जनैर्दग्धो ऽन्तिमां क्रियामवाप। एकेन प्रतिवेशिना शिष्येण तस्मै मुखाग्निर्दत्तः। कुत्र गतौ तत्पुत्रौ? कुत्र गतं तस्य तद्धनम्?

सर्वमिदं विचिन्तयतो मम सप्ताह एकः सन्ताप—वैलक्ष्य—निर्वेदादि—भावशबलो व्यत्यगात्। व्यग्रतया कौशिकस्य सन्देशं, पत्रं, वृत्तजातं वा प्रतीक्षमाणोऽहं सप्ताहद्वयमस्याम्। यदा न कश्चनाऽपि सन्देशः प्राप्तस्तदाऽहमेव दूरभाषेण कौशिकेन सह समालपम्। तस्मिन् संलापे यन्मयाऽऽकर्णितं तेन तु मामकी मानसी दशा द्विगुणां विलक्षतां गमिता। किमहं तद्विषये भवद्भ्यो विनिवेदयेयमिति नावगच्छामि। सर्वस्य निष्कृष्टांशोऽयमस्ति यत् प्रो. उपाध्यायः सुप्रथितो विद्वान्, प्राध्यापकः समृद्धो गृहस्थश्चाऽभूत्। तस्य पुत्रद्वयं तेनोच्चशिक्षां ग्राहितं, प्रतिष्ठितेषु पदेषु च प्रतिष्ठापितं, विवाहादि विहितम्। सेवानिवृत्तेन तेन स्वकीयात् प्रावधायिनिधेः (प्रोविडेन्ट फंड) कश्चनांशो भवननिर्माणे व्ययितः, कश्चन च पुत्राभ्यां प्रदत्तः। लेखनादेरायः, पुस्तकानां (रायल्टी), अधिकोषे संचितस्य राशेः कुसीदम्, इत्यादय आयास्तस्य सानन्दं जीवनयापनाय पर्याप्ता अभूवन्। अत उपाध्यायदम्पती सानन्दं न्यवसन्तम्, समये समये विद्वद्गोष्ठीषु भाषणादये उपाध्याय आकार्यतेस्म संस्थाभिर्विश्वविद्यालयादिभिः। बहुधा तु

पत्न्या सह यात्रां व्यधादयं, किन्तु यदा पत्नी कर्कट (कैंसर) रोगवशाद्विवामारूढा तदारभ्यैकाक्येव यात्रामकरोत्। हृदयरोगः सहसैनमाक्रामदिति सर्वैरवगतमासीत्, औषधमप्ययमगृह्णान्नियमितं, किन्तु चिकित्सक-पदारूढस्याप्यस्य ज्येष्ठपुत्रस्य सविधे नाभूत्तावान् समयो यत् स अमरीकादेशादागत्य बहुकालमस्य चिकित्सां कुर्यात्। कनीयान् सुतोऽपि व्यापारव्यस्तत्वान्नाधिकं समयमस्मै प्रदातुमशकत्।

अत एकाकिना प्राध्यापकेनानेन क्रियमाणासु यात्रासु न कश्चन सहायकोऽभून्न वा सहयात्री। नानेनावगन्तव्यं यत्पुत्रौ तस्य कुपुत्रावास्ताम्। यदि पिता किंचन साहाय्यमयाचत, तौ सानन्दं प्रदातुमचेष्टेताम्। किन्तु एकाकिना क्रियमाणायां यात्रायां यदि सहसैवायं प्राणानत्यजत्, तत्र कः किं कर्तुं शक्नुयात् खलु? एतावत्तु साध्ववगन्तुं शक्यते! किन्तु परस्ताद्यत् संजातं तत्र कां प्रतिक्रियां प्रकटयानीति नावगच्छामि। यदा पुत्रद्वयेन पितुः स्वर्गारोहणस्य वृत्तं श्रुतं, तदिदं चावगतं यत्कौशिकेन तस्यान्त्येष्टिः कृता तदा द्वाभ्यामपि धन्यवादैरयं सभाजितः, अस्मिन् कृत्ये संजातस्य व्ययस्य प्रतिपूर्तिरपि सादरं प्रतिश्रुता किन्तु त्वरितमेव स्वकार्यं विहाय गृहात् प्रत्यागमनेन किं वा सञ्जनिष्यते, इति तर्कयता पुत्रद्वयेनापि स्वस्थाने स्थितेनैव श्रद्धांजलिः पित्रे समर्पितः। गृहजनाः खिन्ना अपि संजाताः स्युः, किन्तु किमेतदतिरिक्तं कर्तव्यमवशिष्टमिति ते नाऽवागच्छन्। वर्तमानस्य व्यस्तयुगस्य व्यस्तजीवना जनाः एतदधिकं किं वा कर्तुमीशन्ते? युगगतिरेव तादृशी। किन्त्वेकं वाक्यं यत् कौशिकेनोदीरितं तस्याशयं कथमहं व्याकरवाणीति न जानामि। द्वाभ्यामपि पुत्राभ्यां वृत्तमिदमाकर्ण्य कौशिकः प्रोक्तो यद्भवता साध्वेव कृतं यच्छवस्यान्त्येष्टिस्तत्रैव विहिता। व्यर्थमस्माकं प्रतीक्षयाऽपि किं साधयितव्यमासीत्? पितुर्निधनं तु स्वाभाविको मृत्युरभूत्। न खलु रेलशकटदुर्घटनायां तन्निधनमजनि। यदि रेलशकटदुर्घटनायां कस्यचन यात्रिणो निधनं संजायते तदा तु रेलविभागीयव्यवस्थानुसारं मृतानां यात्रिणां परिजनेभ्यो रूप्यकलक्षं, लक्षद्वयं, पञ्चाशत्सहस्रं वा मुद्राणां क्षतिपूर्तिविधया प्रदीयते। एवंविधस्य राशेरादानाय तु परिजनानामुत्तराधिकारिणां वा उपस्थितिरावश्यकी, उत्तराधिकारप्रमाणपत्रादि चापि सैरपेक्ष्यते। यदि तादृशी काचन स्थितिरभविष्यत्तर्हि त्वस्माकमुपस्थितिरपरिहार्याऽभविष्यत् परं त्वेतस्यां स्थितौ सर्वं नियतकार्यक्रमं परित्यज्य तत् स्थात्रं प्रति अस्माकं धावनं कस्मै प्रयोजनायाभविष्यत्? अतो भवता यत्कृतं तत्साध्वेव।

सर्वमिदं प्रो. उपाध्यायस्य पुत्रद्वयेन सहजभावेन, सरलमानसवशाद् वा कथितं स्यात्। नाऽत्र कश्चन विस्मयः। एवंविधायां स्थितावीदृशमेव चिन्तनमाधुनिके युगे प्रायशः सर्वेषामाधुनिकानां भवेदिति जानीम एव वयम्। लोकप्रदर्शनाय तादृशं चिन्तनं मनसि निगूह्योपरिष्टात् कृत्रिमं खेदं कश्चन प्रकटयेत्, कृत्रिमं विलापं वा समाचरेदित्यपि संभवति, वास्तविकः सन्तापो भवेत्तदापि किन्त्वेतादधिकं कश्चन कर्तुं क्षमः? अत उपाध्यायपुत्राभ्यां यत् कृतं यच्च कथितं, को वा तत्राऽपराधः? किन्तु मम मानसं तु नाद्यावधि तदिदमवगन्तुं पारयति यत्सर्वमिदं निशम्य किं रोदितुं युक्तम्, हसितुं वा? उपाध्यायपुत्रावाक्रोशस्य पात्रं, निन्दाया वा? अथवा स्वाभाविकी सहजा च सेयं प्रतिक्रिया? युगगतिरिति विमृश्य सर्वमिदं विस्मरेयं वा, नवयुगस्य कलियुगीनं स्वार्थं क्रोशेयं वा? सोऽयं स्वार्थो वा स्पष्टोक्तिर्वा? किमत्र मया निर्णीयेतेत्यत्र यदि भवन्तः किंचित् परामृशेयुः, अहमाभारं वहेयं भवताम्।

# शारदा

## प्रभुनाथद्विवेदी

ग्रामे येषामेव मुखाच्छ्रूयते, तेषां सर्वेषां जिह्वाग्रे शारदाया एव नाम, तस्या एव चर्चा। ग्रामस्त्रियो—वृद्धा युवत्यो बालिकाश्च, या कापि तां पश्यति, वदति, मिलति वा, सा सर्वैव तस्या अनुभावेन सम्मोहितेव, प्रीतेः पराकाष्ठां नीतेव, मधुरसपीतेव, स्वर्गसुखमुपनीतेव, नेत्रनिर्वाणकृतेव, सुधासारसिक्तेव, निर्मूल्यक्रीतेव, तन्मयीभूतेव तामेवानुचिन्तयंती महता स्नेहेनादरेण वा तस्या एवोल्लेखे, सर्वथाऽऽत्मनः कृतार्थतामनुभवति। तस्या आकृतिरेव महत् कुतूहलं जनयति। आकृतिसदृशं रूपं, रूपसदृशं सौन्दर्यं, सौन्दर्यसदृशं लावण्यं, लावण्यसदृशं तरलत्वं, तरलत्वसदृशं मनोहारित्वं, मनोहारित्वसदृशं मौग्ध्यं, मौग्ध्यसदृशं वचनं, वचन-सदृशोऽनुरागोऽनुरागसदृशी प्रीतिः, प्रीतिसदृशी प्रपत्तिः, प्रपत्तिसदृशो व्यवहारो, व्यवहारसदृशी सेवा न जाने कुतः केन विधिना तैरेव सर्वसामान्यैः पञ्चभिः महाभूतैर्विनिर्मितेऽनितर-साधारणे शरीरे समुत्पादितः। प्रथम एव दृष्टिपाते सा स्वर्गादागताऽप्सरा इव, क्षीरसागरात्समुद्भूता लक्ष्मीरिव, मानवशरीरिणी सौदामिनीव, सञ्चारिणी पल्लविनी कल्पलतेव, अमृतरसनिष्यन्दधारेव चन्द्रांशुभिन्ना कुमुदिनीकुङ्मताकलाकलापकल्पितेव, सितासितनयना स्मितानना विलासलीलापुत्तलिकेव प्रतीयते। सा तु चञ्चलाऽप्यचञ्चला, विस्मिताऽप्यविस्मिता, मन्दगतिकाऽप्यमन्दगतिका, पुण्डरीकमुखी अप्यपुण्डरीकमुखी, पद्मनयनाऽप्यपद्मनयना, कनकवलयाऽप्यकनकवलयेति विरोधिनां भावानामप्यविरोधसंश्रयाऽऽसीत्। यतो हिं क्वेयमल्पाकृतिः क्वेदं च सुविशालं हृदयम्, क्वायं रूपातिशयः क्वेयं निरभिमानिता, क्वेदं शिक्षागौरवं क्वायञ्चातिविनयः, क्वेयं स्फीता वाणी क्वेयं सङ्कोचमयी मितभाषिता, क्वेयं कुलीनता क्व च सामान्यव्यवहारः, क्वेयमाधुनिकी शिक्षा क्व च स्मेरानना लज्जा? इयं शारदा प्राचार्यचरस्य श्रीमतो दिनकरवर्मणः पुत्रवधूरस्ति सद्य एवास्मिन् ग्रामे नवागता। युवानस्त्वस्मिन् ग्रामे शिक्षिताः सन्ति बहवः किन्त्वियं सर्वप्रथमा युवती याऽत्र शिक्षिता, साऽपि न काचित्कन्याऽपितु वधूर्नवागता। दिनकरवर्मणः पुत्रस्य विवाहसम्बन्धनिश्चयकाल एव शारदा सुशिक्षितेति वार्ता ग्रामवीथिसु सुगन्धिरिवाधिगतप्रसाराऽभवत्। अद्यापि यदि काचित्स्त्री-बालिका युवती वा-द्विचक्रियानं चालयन्ती ग्रामेषु दृश्यते तदा सा तत्रत्यैर्जनैरेवं साश्चर्यमवेक्ष्यते यत्कोऽपि विचित्र एव जन्तुरन्याद् ग्रहादवतीर्णः कुतूहलस्य विषयः। इत्थमेव शिक्षिता नारी कीदृशी भवतीति द्रष्टुं तां सर्वा ग्रामनार्यः सोत्कमना आसन्। समागतायां तस्यां ग्रामस्त्रीणां समूहो दिनकरवर्मणो गृहे तथैवापतत् यथा शर्कराखण्डे पिपीलिकानां कदम्बकम्। दिनकरवर्मणो नेत्रयोः किमप्यपूर्वं ज्योतिरासीत्। महता श्रमेण त्यागेनात्मबलेन च तेनात्मनः पुत्रः सुशिक्षितः सुयोग्यश्च कृतः। ततश्चार्हतायोग्यताबलेन सोऽप्यभियन्तृपदे चयनितः केन्द्रसर्वकारस्य तापविद्युद्विभागे नियुक्तो बभूव। अथ समारब्धास्ततस्ततयस्सततं तेन सह

कन्यानिवेशाभिलाषिणाम्। तेषां समेषामभ्यर्थनां समीक्ष्य, प्रस्तावं विचार्य, वरकन्ययोरानुगुण्यं सम्प्रधार्य, अभिलषितकन्याविवरणं सुनिपुणं परीक्ष्य, उभयकुलकुलीनत्वमवेक्ष्य, समधीत्वञ्चोपलक्ष्य, यौतुकलाभलोभं तिरस्कृत्य कुलमर्यादामनुस्मृत्य सुशिक्षितया कन्यकया शारदाभिधयाऽऽत्मजस्य तस्य विवाहो विहितः। दिनकरवर्मणो जीवनस्येयं महती समुपलब्धिः यत्तस्य गृहमलङ्करोति लक्ष्मीरूपा सरस्वती समागत्य सौभाग्यसङ्गता सहकाराश्रिता माधवीलता।

नगरे सञ्जाता संवर्धिता विश्वविद्यालये परास्नातककक्षापर्यन्तं शिक्षिता, मातृक्रोडे समुपलालिता, कुटुम्बिजनैर्महतास्नेहेन पालिता शारदा नाम्नीयं कन्या ग्रामपरिवेशे कथं वत्स्यतीति दिनकरवर्मणा यत्पूर्वमाशङ्कितं तत्तु तस्याः पितृचरणैः वरान्वेषणप्रसङ्गे प्रथमवार्तायामेव निराकृतम्। तदानीं दिनकरवर्मा शारदायाः पितरमपृच्छत्—"अपि भवता पृष्टा सा कन्या? नगरपरिवेशाद् ग्रामपरिवेशो भिन्नतरः। नगरेषु यत्सौविध्यं ग्रामे तद्दुर्लभतरम्। अतो ग्रामजीवनं न भवति तथा यथा नगरजीवनम्। द्वयोरपि परिवेशयोः स्वीयं वैशिष्ट्यं भवति। नागरेभ्यो ग्रामजीवनं न रोचते, ग्राम्याः नगरजीवने रुचिं न बध्नन्ति। रुचीनां वैचित्र्यं तु लोकप्रसिद्धमेव। अतो यदि भवान् तामपृष्ट्वैव सम्बन्धं विधायात्र प्रेषितुकामस्तत्तु न न्याय्यम्। यदि तस्या मतिं विज्ञायेयं सम्बन्धवार्ता प्रचलतु तदैव शोभनं नान्यथा।"

शारदायाः पिता प्रत्ययगर्भितेन स्मितेन प्रोवाच—"कथं भवानाशङ्कसे? स्वीयामात्मजां यद्यहं न जाने तत्को ज्ञास्यति? सा तु मम पुत्री गौरिव पुण्यदर्शना न कदाप्यनुचितारम्भ-निर्बन्धेष्वाग्रहवती। मम वचनं तस्या अभीप्सितमन्वेति। अपि च, अहं न तादृश पिता यो निष्ठुरतया यस्य कस्यचित्कण्ठे कन्यां कृत्वा स्वीयं कर्तव्यं पूर्णं मानयति। अधमस्तु स पिता यः कन्यायाः सुखं जीवनं समुज्ज्वलं भविष्यमतिचिन्त्यैव कस्यचित् करे करोति। 'पत्रलेखनमात्रमध्ययनं बालिका नामिति समाजिकीं रूढिमविगणय्य, सुताया इच्छामादृत्य मया तस्यै उच्चशिक्षा प्रदत्ता। न केवलं मे कन्या विद्यालयीयशिक्षामधिगतवती पुस्तकपण्डिताऽपि तु सा स्त्रियोचितसंस्कारसम्पन्ना, गृहकर्मनिपुणा, सकलसद्भावान्तर्भाविता। अहमपि वरस्य विषये सर्वं विज्ञाय, भवन्तं भवतश्च कुलमर्यादां लोकप्रतिष्ठां चेत्येतत्सर्वं समाकलय्यैव भवत्सेवां विधातुकामः समागतोऽस्मि। मदीयां कन्यां शारदां पुत्रवधूं विधाय भवान् पश्चात्तापं नार्हतीति सर्वात्मनाऽऽश्वासयामि।"

एवं शारदायाः पितुर्वचनेन प्रतीतः प्रीतश्च श्रीमान् दिनकरवर्मा सर्वथा तस्या अनुरूपाय वराय स्वसुताय तामङ्गीकृतवान्। शारदायाः पितरं कण्ठेनाश्लिष्य स तमाश्वस्तं कृतवान्। वरान्वेषणगदोल्लाघलघुरिवाभवत् स तपस्वी। अथ शुभे लग्ने सविधि सम्पन्नविवाहसंस्कारा सा शारदा पितृगृहात् सर्वान् वियोगविक्लवान् साश्रुनयनान् कृत्वा द्वैधीभूतमानसा मङ्गलामोदनिर्भरं कौतुकोत्सवसम्भृतं स्वागतसमारोहसंयुतं नववध्वागमनोत्सुकं पतिगृहं समाजगाम। अनेन सम्बन्धेन द्वयोरपि कुटुम्बयोर्लोके महती प्रतिष्ठा बभूव। श्रीमान् दिनकरवर्मणस्तु पूर्वत एवादर्शाध्यापकरूपेण सर्वत्र महत्सम्मानमासीत् किन्तु निर्यौतुको विवाहोऽयं न केवलं तस्मै मनःप्रसादं प्रायच्छदपितु स्वर्णे सुगन्धिरिव तस्य कीर्तिकल्पलतां समधिकतरं प्रथितवान्।

श्रीमतो वर्ममहोदयस्य पुत्रवधूः शारदा समागतेति शुभवार्ता विद्युत्तरङ्ग इव विश्वस्मिन् ग्रामेऽचिरादेव कर्णपरम्परया व्याप्ता बभूव। श्रुत्वा यो यथासीत् स तथैव कौतुकाकृष्टचेतसा त्वरितपदस्तस्या एव गृहं द्रवितवान्। गृहद्वारे यानादवतरणकाल एव तां द्रष्टुं महान् जनसम्मर्द उत्प्लुत्येवाजगाम। सोत्कमनाः स्त्रियः, स्निग्धदृष्टयो युवानः, कौतुकप्रियाः बालाः, शुभाशीस्संवलितमानसा वृद्धाः, सर्व एवाहमहमिकया प्रोत्फुल्लनेत्रा यावत्तत्राग्रेसर्तुं प्रयतमाना आसन्, तावदेव सौभाग्यभूषिताः कुलस्त्रियो ग्रामसमुदाचारपूर्वकं तां पाटलकोमलां वस्त्रालङ्कारविद्योतमानां वधूं यानादवतार्य गृहाभ्यन्तरं नीतवन्त्यः। तत्र सा सुसज्जित एकस्मिन् कक्षे, यं जनाः गुप्तागारमिति कथयन्ति, सुखासने समुपवेशिता। नापरमपि परं गृहमागतेयं वधूर्मानानुभवत्वसहजतामिति गृहयुवत्यस्तस्याः मनोविनोदनार्थं विविधानि ग्रामवचनानि हास्यपराणि च गीतमङ्गलानि समाचक्रुः।

मङ्गलामोदनिर्भर आनन्दामृतनिर्झरो वध्वा गृहागमनमहोत्सवदिवसः कथं लघुकाल इवाविदितगतिको रविरथारूढोऽपि जनैरलक्षितो विमलज्योत्स्नांशुकवसनावृतां निर्दोषामपि प्रदोषमुखीं प्रियतमां शर्वरीमुपससर्प। शारदामुखमवेक्ष्य विलज्जमाना राजीवराजयः प्रतीचीदिङ्मुखाय सकलमेव रक्तरागं समर्प्य निमीलितनयना नतमुखाः बभूवुः। चारुहासच्छबिभिः ज्योत्स्नया सह प्रतिस्पर्धमाना कलहंसकोमलकन्धरकमनीयकलिकाकुमुदकुलवधूः ताराङ्कितनभोनीलवितानाधोबिम्बानुबिम्ब-खचितमुक्तामणिविमलरजतविशदमृदुसलितास्तरपर्यङ्के सविलासं ललास। निशानिःश्वासनिभः पवनः सुरभिशीतलसंस्पर्शहर्षपुलकोद्गमं कुर्वन् प्राणिनां मनांसि विभावयन् प्रवहति। वृक्षेषु दिवसावसानविश्रममुदितवयसां कलकूजनं मन्दिरेषु ललितस्वरपूजनमिव प्रतिभाति। नभसि विद्योतमानां तारावलिं विशालमरकतमणिस्थलनिहितदीपप्रकरमिव सज्जीकृत्य रजनी नीराजनं कुर्वाणा विभाति। नभसि चरुचन्द्रबिम्बः प्रकृतिसुन्दर्याः नीलांशुकावगुण्ठनच्छायाछुरिते भाले ललामललाटिकेव लसति। प्रकृतेः काचिदपूर्वा छटा भुवस्तले विराजते। एवं गच्छत्सु प्रमोदामोदमयेषु दिवसेषु सोऽपि दिवस आगतो यः शारदायाः पत्युरवकाशावधेरेकशेष आसीत्। स विवाहार्थं गृहीतावकाशो गृहमागत आसीत्। व्यतीते सत्यवकाशे स स्वीयकार्यस्थलं प्रति गमनात्पूर्वं प्रियतमां जायां शारदां पप्रच्छ—"अपि त्वं मया सह जिगमिषसि? त्वां विना कथमहं तत्र वसामि। मन्ये, दिवसस्तु कार्यव्यापृतौ यास्यति किन्तु रात्रावपगतनिद्र एव भवामि। अतश्चलतु मया सह। अहं पूज्यौ पितरौ पृष्ट्वा त्वामपि नेतुं समीहे। तौ निषेधं न करिष्यतः। प्रसज्जय, प्रस्थानवेला त्वागतैव" इत्युक्त्वा, 'इयं का कथयिष्यती'त्याशयेन तस्या मुखे दत्तदृष्टिस्तस्थौ। पत्युरेवंविधं वचनं श्रुत्वा सा वधूर्नवोढा क्वचिदुत्क्षिप्य नीतेव, सुधारसपीतेव, चकितहरिणीनयना भीतेव मन्दस्मितविकस्वराधरपल्लवदृश्यमानकुन्दकुड्मलदन्तधवलिम्ना सत्त्वसम्पूरितेव सुखोपनतप्रयतप्रकटप्रणयप्रचयप्रगतरागरञ्जितेव कथनप्रथनमनोमथनसमुद्भूतनयनिचय-दोलान्दोलनचिन्तितेव 'किं कथयामी' ति सहसा निश्चेतुमसमर्था सती निर्भरं जहास। तां तथा हसन्तीं विलोक्य विस्मितस्याऽपि स्मितवदनस्य चञ्चद्विलोलनयनस्य तस्य तपस्विनो मुखान्निर्गतं मुग्धतयैव—"कथं हससी"-ति। ततस्तस्य कपोलयोः सुखदं स्निग्धं रोमाञ्चकरं कोमलकरस्पर्शं ददती सा सुदती प्रोवाच—"अयि, अरविन्दमकरन्दमिलिन्द! कथं मधुरससरसि निमज्जसि?

यद्यपि स्त्रीणां कृते पतिमुखदर्शनमेव सर्वं सुखम्, पतिवियोगतुल्यं नान्यत्किमपि दुःखम्। किन्तु, लोकालोकं स्तोकमपि पश्य, यस्मिन्नालोके मर्यादितं जीवनं जीवन्ति जनाः। सद्य एव परिणीताऽहम्। दशदिवसा अपि न व्यतीतास्ततः। चरणालक्तकरागोऽपि तावन्न प्रमृष्टः। यद्यहं भवता सहैतद् गृहं विहाय गच्छामि, कलङ्किता भवति कुलमर्यादा, विनश्यति वंशपरम्परा। अपि च, जना न जाने किं किं कथयिष्यन्ति? गृहे वृद्धौ श्वसुरौ। तयोः सेवां परित्यज्य भवता सह मदीयं गमनं शोभते किम्? भवान् तत्राधिकारिपदे विराजते। भृत्यवर्गो भवतः सेवां विधातुं सदैव प्रस्तुतो बद्धाञ्जलिः। तत्र भोजनादिप्रबन्धे सौकर्यमस्त्येव। अत्र द्वावेव कुलवृद्धौ कुटुम्बे। यद्यहमत्र गृहे वसामि, मत्कारणाद् भवानपि वारं वारं गृहमागमिष्यति। नेत्रासेचनकं पुत्रं दर्शं दर्शमनयोर्हृदयोल्लासः आवयोर्दाम्पत्त्यसख्यसौख्यविलासो भविता। अतो यावज्जीवतः श्वसुरौ ममात्र निवसनं वरमथवा, यथाज्ञापयति, श्रीमान् पतिमहाशयः" इत्युक्त्वा सा पुनरपि जहास।

स पितृभक्त आसीत्। स्वपितरौ विहाय नवं गृहमागतायाः भार्याया एतद्वचनं निशम्य तस्य नेत्रकोरकेऽश्रुजलसिक्ते बभूवतुः। तां कण्ठेनाश्लिष्य साधुवादपुरस्सरं सोऽब्रवीत्—"अत्रभवती श्रीमती न केवलं प्रेम्ण आदरस्याप्यधिकारिणी। समुत्तीर्णा खल्वद्य परीक्षायाम्। तव हार्दं भावं परीक्षितुमेव मया तथोक्तमासीत्। न केवलं प्राणवल्लभाऽसि त्वमिदानीमपि तु ममापरे प्राणा एव। मदीयाऽऽशा त्वयि फलवती सञ्जाता। वस्तुतो येऽपत्याः भोगलिप्सया वासनाजाले पतिताः पितृसेवां विमुच्य पराङ्मुखाः पृथगेव रमन्ते ते कुपुत्राः गर्हितजन्मानो लोकं परलोकं च विकारयन्ति। तैः नरकेऽपि वासो लभ्यते किम्? सन्ततिस्तु पित्रोः परत्रेह च शर्मणे भवति। अहो! त्वन्मुखादेतत्सर्वमुपश्रुत्य परमं प्रीतोऽस्मि।" अपरेद्युः स पितरावापृच्छ्य स्वनियोगमशून्यं कर्तुं प्रतिजगाम।

गते तस्मिन् प्राणप्रिये पुत्रे वृद्धाश्वश्रूः शारदां स्वाङ्के निधाय सकरुणं विलोक्य सधीरमुवाच—"एष मे पुत्रो मदीयं सौभाग्यफलमिव, मामवन्ध्यां कर्तुमिव, मां वन्द्यां विधातुमिव स्वर्गाच्च्युतो ममाजिरे समागतः। अद्य स मदर्थमेव त्वां विहाय गतवान्। कथं न गता त्वं तेन सार्धम्? अपि स मनागपि त्वां नेतुं न यत्नवान्? तस्य सुखे एवावयोः सुखम्। किं त्वयाऽपि निर्बन्धो न कृतः? कथं तेन विना कालं जेष्यसि?" अहो केयं करुणा? का च प्रीतिमयी स्नेहसंवित्तिः? सत्यम्, स्त्रीरेव स्त्रीहृदयं विजानाति। इयमेव सहानुभूतिराख्याता।

शारदा तु लज्जानम्रमुखी आरक्तवदना स्मितनयना शनैरुवाच—"मात! कथमेवं भणसि? भवत्सेवामतिरिच्य नान्यन्मे सुखम्। सेवाया प्रतिमूर्तिरिव कन्या विधिना निर्मिता। एकं जन्मगृहं मातापितरौ बन्धुबान्धवौ विहाय गृहिणो भूत्वाऽन्यद् गृहमपि च तत्सर्वं सेवते। महता पुण्यफलेन सौभाग्येन चैतादृशं गृहं पतिं च प्राप्नोति काचित्कन्या। भवत्याः स पुत्रो मे पतिदेवो मह्यमतीव स्निह्यति। आवां परस्परं महतामोदेन विमृश्यैवैतादृशं निर्णयं कृतवन्तौ। अस्त्यस्मिन् विषये मतैक्यमावयोर्न कश्चिद् विभेदः। स तत्राजीवमर्जति, श्वसुरौ चेयमत्र सेवते। काले-काले सोऽप्यत्रागत्य पश्यतु यत्तस्य भार्या शारदेयं सेवाकर्मणि वर्तते कीदृशी कुशालिनी? श्रूयते मया, पुरा जनाः सभार्यं कुटुम्बं परित्यज्य धनार्जनं कर्तुं सुदूरं परदेशं गतास्तत्र कियन्त्येव वर्षाणि व्यतीत्य गृहमायान्ति स्म। अधुना तु प्रगतिवशान्न किमपि दूरम्। भवदात्मजो ममैष प्रियतमः

सर्वसौविध्यं भजते। तस्य कार्यस्थलमपि नातिदूरं विद्यते। अतः सुकरमेव तस्यासकृदागमनम्। ममात्रावस्थानस्यास्त्यपरमपि कारणम्। जन्मनाऽहं नगरनिवासिनी। अतएव नगरवासाय नास्ति मे स्पृहाविशेषः। ग्रामजीवनं प्रत्यस्त्येवौत्सुक्यं कुतूहलं वा। पठितमासील्लिखितं भाषाकविना राष्ट्रकविना श्रीमैथिलीशरणगुप्तेन—'अहो ग्रामजीवन भी क्या है! क्यों न इसे सबका मन चाहे?' इति। अपि च, केनचिदन्येन—'देवता मिलेंगे खेतों में, खलिहानों में।' एतदाकर्षकं कृषकबहुलं ग्रामजीवनं द्रष्टुमनुभवितुं तत्र च सहभागित्वं विधातुं सोत्साहं सोत्कण्ठं च मनो मे रोचते।"

वधूमुखादेतदुपश्रुत्य सा शरीरिणीव करुणामूर्तिर्ग्रामवृद्धाऽऽनन्दाश्रुपूरितनयना पुनरपि गृहसौभाग्यलक्ष्मीं तां सुचिरं निर्वर्ण्य गाढमालिङ्ग्योरसा शिरसि च करमाशीर्वादमुद्रया व्यापारयामास। सा शारदाऽपि मातृस्निग्धस्पर्शसुखमिवानुभूयमाना पुलकितदेहा विदेहेव तथैव चिरं तस्थौ।

शारदा नागरी कन्या कथायां वर्णिता वधूः।
गुणाढ्या शीलसम्पन्ना शोभते गृहिणीपदे ॥1॥

काम्यते तादृशी सर्वैः शारदेव कुलाङ्गना।
पुण्येन प्राप्यते किन्तु लक्षेष्वेका क्वचिद्गृहे ॥2॥

कन्यागुणमनादृत्य याचते यस्तु यौतुकम्।
स्यात्सम्मान्यः कथं सोऽथ यथा वर्मा दिनकरः ॥3॥

वधूः सुशिक्षिता साध्वी गृहे सेवापरायणा।
दम्पत्योः सख्यभावेन सुखमक्षय्यमश्नुते ॥4॥

तत्त्वधीर्यः कथामेतां पठेद्वा शृणुयादपि।
गृहे तस्य समागच्छेद्वधूर्लक्ष्मीस्तु शारदा ॥5॥

---

*यक्षगानम्...*

# इन्द्रसन्देशः

## के. वि. रामकृष्णमाचार्यः

नान्दी

श्रीमद्गोपशिशो! तवाद्रिभरणं मिथ्येति लीलोत्कया
रुक्मिण्याभिहितः प्रदर्श्य कृतकं रोषं स मा वल्लभः।
'एकं किं नु वहेयमद्य युगलं पश्येति तस्यास्तदा
वक्षोजद्वयमुद्वहन्नवतु नो लज्जानतां रञ्जयन् ॥'

(ततः प्रविशति सूत्रधारः पारिपार्श्विकेन सह)

पारिपार्श्विकः — भाव! किमेवं मङ्गलमाचरसि? किमपि नूतनं कार्यमारभ्यते?

सूत्रधारः — ननु न जानासि? अत्र समागताः सकलकलाकोविदाः सङ्गीतसाहित्यरसिकाः बहुविधरूपकरचनाप्रयोग-परिवृढाः सभास्ताराः तैरादिष्टं यत् महाकविग्रामणेः भोजराजसभाविद्वन्मणे : वदान्यशेखरस्य श्रीपदलाञ्छनस्य श्रीमतो माघकवेः कृतिमाधारीकृत्य किञ्चिद्रूपकं यक्षगानप्रक्रियामालम्ब्य रचितमिति श्रुतमस्माभिः। यक्षगानप्रक्रियायामपि कूचिपूडियक्षगानप्रक्रिया काचिद्विशिष्टा वरीवर्ति यत्र नाटयस्य अभिनयस्य च समं प्राधान्यमुल्लसति। तत्सज्जीभव प्रकृतं समयमधिकृत्य गीतमालापय।

पारिपार्श्विकः —

विकसितकमलास्या बाणपुष्पायताक्षी
शुकमधुरवचस्का काशपुष्पप्रहासा।
परिणतफलसस्या पीतवर्णांशुकान्ता
घनपुलिननितम्बा जृम्भते शारदश्रीः ॥

सूत्रधारः — अहो! गानमाधुर्यम्।

पारिपार्श्विकः — भाव! शिशुपालादिदुष्टशिक्षणार्थं भुवि देवक्यामुत्पन्नस्य भगवतो वासुदेवस्य किलेयं नगरी।

सूत्रधारः — आम्! येयं—

श्रीवाणीनिलया ह्युपेन्द्रसरसक्रीडाविहारालया
रङ्गत्तुङ्गतरङ्गघोषकलितेनाम्बोधिनावेष्टिता।
भूवैकुण्ठमिव स्थिता त्रिदशयोगीन्द्रादिभिः सेविता
सौभाग्यादिसमन्विता विजयते श्रीद्वारकाख्या पुरी ॥

अत्र हि–

सर्वे धर्मपरायणाथ ललिताः सर्वे कृपासम्पदः
सर्वे वेदसुगीतकर्मनिरताः सर्वेऽनघाः पावनाः।
तत्त्वज्ञानसमन्विताश्च विलसन्त्युद्दीपितप्राभवाः
अस्यां सात्त्विकभावसम्मिलितसद्भावाः जनाः सत्पथाः॥

अपि च–

देवः श्रीहरिरप्रतीप सुषमा सम्मोहिनीभिः सदा
ह्यष्टाभिर्महिषीभिरुज्ज्वलतरै र्गोपीगणैर्भ्यान्वितः।
सौधोद्यानतटाकसैकतसरःप्रान्तेषु रासोत्सवैः
श्वेतद्वीपमिदं हि शोभयति सौख्याद्यन्वितभ्येज्ज्वलैः॥

(परिक्रम्य अवलोक्य च) कोऽसौ त्वरिततरमित एवागच्छति! (परिशील्य) आम्! ज्ञातम्। अयं कश्चन गोपालः यादवकुलचूडामणेः भगवतः श्रीकृष्णदेवस्य द्वारपालः। भवतु! एनमाह्वयामि। भो! गोपाल! एह्येहि। (गोपालः प्रविशति) को विशेषः राजसदने!

**गोपालः** — किं न जानासि? पाण्डवमध्यमः पार्थः हस्तिनादागतः।

**सूत्रधारः** — किमर्थमागतः?

**गोपालः** — पाण्डवाग्रजेन युधिष्ठिरेण राजसूयाध्वरः चिकीर्षितः। तस्य निर्विघ्नसमाप्तये देवदेवस्य सान्निध्यम् अपेक्षमाणः सपरिवारं देवमाह्वातुं पार्थं प्राहिणोत्। भवतु। त्वरिततरं निर्वर्तनीयं कार्यं वर्तते। गन्तुमनुमन्यस्व।
(इति निष्क्रान्तः) (नेपथ्ये कलकलः)

**सूत्रधारः** — कथमेते जनास्सर्वेऽपि गृहाद्बहिरागस्य उन्नमितकन्धराः व्योम्नि बद्धदृष्टयः साश्चर्यं पश्यन्ति। (आकाशे अवलोकनं नाटयित्वा) मारिष! मारिष! पश्य! पश्य! कश्चित् कान्तिपुञ्जः आकाशादित एवापतति। किं वा भवेत्?

**पारिपार्श्विकः** — अनूरुसारथिः?

**सूत्रधारः** — न। तस्य गमनं तिरश्चीनं किल।

**पारिपार्श्विकः** — तर्हि अग्निः।

**सूत्रधारः** — सोऽपि न! अग्नेरुर्ध्वज्वलनं किल प्रसिद्धम्।
एष तु प्रकाशः अधःपतति किल। (भृशं निरूप्य)
नायं कान्तिपुञ्जः। किन्तु कश्चन शरीरी। न केवलमेतत्।
अयं पुमान्। भाव! पश्य! पश्य! अयं ब्रह्ममानसपुत्रः
नारदः। अहो सौभाग्यमस्माकम्। पश्य!

गीतम्

गानसुधारसप्लावनभोगजभोगिशयननुतिकारी
पुञ्जीकृतघनसारपरागसदृशशरीरविशोभी
मौञ्जीमेखलाबद्धहरिणत्वगन्तर्वसनविभासी
नलिनी केसरकल्पजटाधरो हेमतन्तुवरसूत्री

सन्ततनारायणमन्त्राक्षरजपसम्प्राप्तमहौजाः
श्रीमहतीनादामृतलोलुपपरमपुरुषभक्तेन्द्रो
हरि हरि हरि हरि हरि हरि हरिरिति
गायन् नृत्यन् महतीं ध्वनयन्

आयात्येषः कलहाहारी! आयात्येषः कलहाहारी!

(ततः प्रविशति यथानिर्दिष्टो नारदः)

गीतम्

नारायण ते नाममहत्त्वं स्तोतुं शक्तः को हि हरे!
सदवनदीक्षित! दुर्जननाशक! श्रीनिवास! जगदेकपते!
नारायण! हरे! नारायण! हरे!
नारायण! हरे! नमो नमो ॥नारायण ॥

मत्स्यकूर्मकिटिनृसिंहवामनरैणुकेयश्रीराम।
रेवतीरमण! राधिकाभरण! भवसागरसन्तरणा ॥
नारायण! हरे! नारायण! हरे!
नारायण! हरे! नमो नमो ॥नारायण ॥

नामजपात्ते रक्षःपुत्रो भक्ताग्रिमतामाप किल।
वानरोऽपि ते भक्तत्वाद्धि विधिरपरस्समभूत्खलु हे ॥
नारायण! हरे! नारायण! हरे!
नारायण! हरे! नमो नमो ॥नारायण ॥

घोरदुरितभवभारशमाय धृतनरनारायणरूपा।
रामकृष्णविबुधार्चितश्रीकरवासुदेवपरमात्मन् ॥
नारायण! हरे! नारायण! हरे!
नारायण! हरे! नमो नमो ॥नारायण ॥

सूत्रधारः
पारिपार्श्विकः } — अक्षयवेदनिधये गानाम्बुधिपारदृश्वने ब्रह्मर्षिपुङ्गवाय नमो नमः!

नारदः — आयुष्मन्तौ भवतम्। अभीष्टार्थसिद्धिरस्तु। निवेदयतमस्माकं देवकीनन्दनसौधमार्गम्।

सूत्रधारः
पारिपार्श्विकः } — यथा ज्ञापयन्ति भवन्तः। (इति सर्वे निष्क्रान्ताः)

## इति प्रस्तावना

(श्रीकृष्णसौधद्वारि कश्चन गोपालस्तिष्ठति। नारदः प्रविशति।)

द्वारपालः — को वा भवान्?

नारदः — अरे! मूढ! मामेव न जानासि?

द्वारपालः — किं तव मुखे लिखितं ते नाम।

नारदः — आकृत्यावगन्तुं शक्यते किल।

द्वारपालः — जटादीर्घकूर्चादिचिह्नैस्तपस्वीति चेत् दण्डाग्रसंयोजिततुम्बीवहनम-सङ्गतम्।

नारदः — नेदं सामान्यं तुम्बीवायम्। किन्तु एषा महती वीणा।

द्वारपालः — महती वा भवतु लघ्वी वा। ततः किम्?

नारदः — (स्वगतं) मूढोऽ यं मां न अभिजानाति। (प्रकाशं)

## गीतम्

नारदोहम्! ब्रह्ममानसपुत्रो नारदोहम्॥
संततनारायणमन्त्राक्षरजपशिष्टात्मा नारदोहम्॥
विश्वजनीनाभ्युदयंभावुकमहितान्तरङ्गनारदोहम्॥

द्वारपालः — ज्ञातम्। त्रिलोकसञ्चारी कलहभोजन इति प्रसिद्धः भवानेव किल? किं भवान् क्षुधार्तः समागतः?

नारदः — रे! असम्बद्धप्रलापिन्! अस्मदागमनं भगवते निवेदय।

द्वारपालः — क्षन्तव्योऽयं जनः। यथाज्ञापयति महर्षिः। (इति पटान्तरं गत्वा पुनरागत्य) महर्षे! देवः भवद्दर्शनाकाङ्क्षी स्वागतसत्कारादिभिः भवन्तमेव प्रतीक्षते। तदागच्छतु भवान्। (इति निष्क्रान्तौ)
(ततः प्रविशति अर्घ्यादिकया सामग्र्या सज्जीभूतः श्रीकृष्णः। नारदोऽपि अनन्तरं प्रविशति)

नारदः — क्षीराब्धिमध्यभुजगेन्द्रमहासनाय देवाय नाभिकमलोदितपद्मजाय।
योगीन्द्रभाज्यगगनामलनित्यबोधभूमाभिधाय पुरुषाय नमः परस्मै॥
(*कृष्णलीलातरङ्गिणी*)

नमो नमः परमपुरुषाय।

कृष्णः — स्वागतं मौनिराजसेविताङ्घ्रिनीरजाय धातुरात्मजाय दिव्यधाम भानवे।
वेदवेदान्तभव्यसन्निधिस्वरूपाय लोकशङ्कराय नारदाह्वयाय ते ॥
महर्षे! अभिवादये! स्वागतम्। इदमासनमधिष्ठीयताम्। (नारदः उपविशति)
महर्षे! मादृशां शरीरभाजां भवदीयं दर्शनं कालत्रितयेऽपि योग्यतामभिव्यनक्ति। यतो हि—

हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥

(*शिशुपालवधं* 1/26)

अतश्च—
विलोकनेनैव तवामुना मुने कृतः कृतार्थोऽस्मि निबर्हितांहसा।
तथापि शुश्रूषुरहं गरीयसीर्गिरः अथवा श्रेयसि केन तृप्यते ॥

(*शिशुपालवधं* 1/29)

नारदः — गीतम्

न वाच्यमित्थम् स्वामिन् भवता।
न वाच्यमित्थम् पुरुषोत्तम त्वया।
त्वद्दर्शनादृते किं प्रार्थ्यं महर्षीणाम् ॥न वच्य ॥
पुराणपुरुषस्त्वं, प्रकृतेः पृथग्भूतः
मोक्षार्थं प्रवृत्तानाम् अक्लेशात्वमग्रभूः।
लोककण्टकराक्षसान्निर्मूलयितुमिह नागतो यदि योगिनामप्यलभ्यं त्वद्दर्शनं मे कथं वा स्यात् ॥न वाच्य ॥ हे स्वामिन्। उज्झितक्रमः त्वं क्रमेण भुवनद्विषः पेष्टुं प्रवृत्तोऽसि। अथापि त्वदाभाषणलोलुपं मनः मां वाचालयति।

गीतम्

तदिन्द्रसन्दिष्टमुपेन्द्रयद्वचः
क्षणं मया विश्व-जनीनमुच्यते।
समस्तकार्येषु गतेन धुर्यताम्
अहिद्विषस्तत् भवता निशम्यताम् ॥

(*शिशुपालवधं* 1/41)

अभूदभूमिः प्रतिपक्षजन्मनां भियां, तनूजः तपनद्युतिः दितेः।
यमिन्द्रशब्दार्थनिषूदनं हरेः हिरण्यपूर्वं कशिपुं प्रचक्षते ॥

(*शिशुपालवधं* 1/42)

सटाच्छटाभिन्नघनेन बिभ्रता नृसिंह! सैंहीमतनुं तनुं त्वया।
स मुग्धकान्तास्तनसङ्गभङ्गुरैः उरोविदारं प्रतिचस्करे नखैः ॥

(*शिशुपालवधं* 1/47)

सोऽपि पुनः देवैः युद्धकण्डूतिमपाकरिष्णुः रावणो नाम रक्षः वभूव किल। तमपि—

स्मरत्यधो दाशरथि र्भवन् भवान् अमुं वनान्ताद्वनितापहारिणम्।
पयोधिमाबद्धचलज्जलाविलं विलङ्घ्य लङ्कां निकषा हनिष्यति ॥

(*शिशुपालवधं* 1/68)

अथायमेव पुनः शैलूषः भूमिकान्तरमिव शिशुपालसंज्ञया तिरोहितः सन्, बलावलेपात् अधुनापि पूर्ववत् प्रबाधते। तदेनम् उल्लङ्घितशासनं विधेहि कीनाशनिकेतनातिथिम्। शुभेतराचारविपक्त्रिमापदम् एनं जहि। पुरन्दरस्य भवदग्रजस्य हृदयं पुनरुदूढद्रढिम सम्पद्यताम्।

**कृष्णः** – नारदमहर्षे! जानामि सर्वं तस्य दुश्चारितम्!। अथापि—

सहिष्ये शतमागांसि सूनोस्त इति यन्मया।
प्रतीक्ष्यं तत्प्रतीक्ष्यायै पितृष्वस्रे प्रतिश्रुतम् ॥

(*शिशुपालवधं* 2/108)

अतश्च वक्तव्यो मद्वचनादग्रजोऽचिरेणैव मनोरथस्ते फलितेति।

**नारदः** – अनुगृहीतोऽस्मि स्वामिन्। अनुज्ञायतां स्वर्गमनाय।

**कृष्णः** – तथा (निष्क्रान्तः)

**नारदः** – (गीतं गायन् निष्क्रामति)

जय जय रमानाथ जय जय धरानाथ
जय जय सदालोक क्षेमंकरार्य ॥जय जय ॥
निगमगोचरनित्यनिर्मलानन्दघन-
विगलितमहामोहविमलविज्ञान-
खगयानसञ्चारखण्डितासुरनिकर-
सकलगुणसम्पन्नसह्यपरिपूर्ण ॥जय जय ॥
मुरनरकसंहारमूढमतिजनदूर-
परिजनशिवंकरपरावरशरीर-
निरवधिककारुण्य निखिललोकशरण्य
अतिलोकलावण्य मुनिगुरुवरेण्य ॥जय जय ॥

इति श्रीवाधूलकुलतिलकेन यतिराजवल्लीवीरराघवसुतेन, नृसिंहगुरुसेविना वेङ्कटरामकृष्णमाचार्येण सन्दृब्धम् इन्द्रसन्देशाख्यं यक्षगानं समाप्तम्।

---

*परिचयः...*

# झारखण्डप्रदेशस्य स्वातन्त्र्यवीरः सिद्धुः

**मोहनानन्दमिश्रः**

सन् 1855 खृष्टाब्दस्य जनवरीमासे संतालेषु एकः नेता अवतरति, स आसीत् बधनाडीहस्य चनुमांझी इति नामधेयस्य ज्येष्ठपुत्रः सिद्धुः। अस्ति बधनाडीहबरहेतस्य दक्षिणपार्श्वे एकं ग्रामम्। अस्मिन् ग्रामे सिद्धुः कानू, चान्द, भैरवाख्याः चत्वारो भ्रातरः निवसन्ति स्म। सिद्धुः षट् फीट दीर्घकायः, शालप्रांशुमहाभुजः सर्वेषां प्रियः। न केवलं सन्तालाः अपितु तस्य नेतृत्वे चर्मकारः, कुम्भकारः, लौहकारः डोमान्त्यजाश्च चलन्तिस्म। 1855 खृष्टाब्दस्य 28 जुलाई इति दिवसस्य भागलपुरकमिश्नरस्य रिपोर्टतः ज्ञायते यत् आंग्लविरोधिजनाः विविधोपायेन संतालानां सहाय्यं कुर्वन्तिस्म। सिद्धुः ग्वालान् तेलिकान् सह परामृशतिस्म। लौहकाशः अस्त्र-शस्त्रान् निर्माय प्रदास्यन्तिस्म। चर्मकाराः ढक्कां निर्मीयन्तेस्म। संतालाः कर्मवीराः बलिष्ठाश्चासन्। सिद्धुः गभीरस्वभावस्यासीत्। कानू बुद्ध्या विचक्षणः तथा सैन्यसंचालने दक्षः आसीत्। चान्द-भैरवौ संगठनकार्ये दक्षौस्तः। 1855 खृष्टाब्दस्य जूनमासे सिद्धुः स्वप्नमदर्शि यत् ठक्कुरः तम् निर्देशयति, 'सृजतु संतालानां राज्यः, विनाशयतु कम्पनी-राज्यम्, तत्रैव विनाशयतु आंग्लप्रबन्धकान्, नीलहे साहबान् च। मध्यस्थ मीरजाफरान् नाशयतु। स्वयमेव राजस्व संग्रहं कुरू।' 'महिषोपरि आनाद्वयं, वृषभोपरि अनेकं राजस्वं संग्रहयतु। यदि कोऽपि मार्गे आपतति तर्हि तम् देशस्य शत्रुरूपेण स्वीकुरू। उपर्युक्त स्वप्नवार्ता सिद्धुः स्वभ्रातृन् श्रावयति, स्म। तत्पश्चात् शालाशाखाया माध्यमेन संतालस्यैकता संवर्धिता। इत्थं वक्तुं शक्यते यत् शालवृक्षस्य माध्यमेन संतालस्यैकीकरणमभवत्।

30 जून 1855 खृष्टाब्दे दशसहस्रसंतालाः बधनाडीहे उपस्थिताः। कानुठक्कुरस्य सम्बन्धे लोकान् प्रबोधयत्। वधयन्तु लोकान् ये संतालान् विरोधयन्तिस्म। ठक्कुरः दिव्य गौरवर्णाभः। तस्य हस्ते विंशति अङ्गुलयः आसन्। तस्यादेशेन् विंशति लिखितानि पत्राणि आसन्। ते सर्वे चतुर्भागे विभक्ताः आसन्। आदेशाः चत्वारिभागे आसन्। ठक्कुरः स्वादेशः सिद्धुमश्रावयत्। एकं पुस्तकं दत्तवान्। तत्पश्चात् स अन्तर्ध्यानायते। चान्दभैरवो समुपस्थितान् संतालान् प्रबोधत। सर्वे ठक्कुरादेशाः पालयन्तु। जननेता सिद्धुः महाशयस्य गृहस्य निकटे एका पुष्पवाटिका आसीत्। तत्रैव प्रस्तरोपरि ठक्कुराङ्गुलयः चित्रितानि आसन्।

समवेतस्वरे संतालाः सिद्धोर्नेतृत्वं स्वीकुर्वन्तिस्म। स कम्पनी-राज्यस्य विनाशं कृत्वा स्वराज्यस्य स्थापनाय यत्नशीलोऽभवत्। सिद्धुः तस्मिन् समये तस्या सभाया कीर्ता, भादो तथा सुनामाझिं कम्पन्यामफसरानां कृते घोषणापत्रान् प्रस्तूतयतिस्म। सर्वे आंग्लाधिकारिणः पंचदशदिनाभ्यन्तरे संतालानां भूमिं परित्यज्य प्रवसयन्तु 14 जुलाई 1855 खृष्टाब्दे भागलपुरस्य तदानीन्तन मजिस्ट्रेटः मि. रिचार्डसनः सर्वं ज्ञात्वा संतालान् प्रतिरोद्धुं यत्नशीलोऽभवत्।

तस्मिन् समये भागलपुरस्थ कलक्टरः मि. पोन्टेटः राजमहले आसीत्। ते सर्वे शाहसुजानिर्मित संगीदालाने निवसन्तिस्म।

विद्रोही संतालाः बधनाडीहतः सैंथिया, कलंग तथा राजमहलदिर्शि गच्छन्तिस्म। बरहमपुरतः चतुश्शतसैन्याः मि. टुगुऽस्याधीने संतालान् प्रतिरोद्धुं ब्रजन्तिस्म। भागलपुरस्थ कमिश्नर मि. सि. एफ. ब्राउनः 8 जुलाई 1855 तमे खृष्टाब्दे राजमहले सैन्यदलान् प्रेषयितुं निर्देशत। दानापुरतः सैन्यानि संतालान् रोद्धयितुं चलन्तिस्म। वीरभूमः बाँकुडा, सिंहभूमः मुंगेर तथा पूर्णियाप्रभृति जिलायाः कलक्टराः अपि सैन्यान् प्रेषितवन्तासन्। घोघा तथा चन्दन नद्यौ तटौ सशस्त्रसैन्याः प्रतिनियुक्ताः। पूर्णियाया मजिस्ट्रेटेन नाति-विलम्बेन सैन्यानां दलं हस्तियुक्तेन कारितम्।

संतालाः युद्धास्त्र युक्ताः आसन्। बाबूपुरतः पंचखुटियामार्गे आंग्लशासकाः समर्थकाश्च संतालान् विरोधमन्तिस्म। तत्र सज्जाउल नायब खाँ प्रधानश्चासीत्। कानु तं वधयतिस्म। आंग्ल-पक्षपातिनः मानिकचौधुरी, गोराचाँद, सार्थकरक्षित, निमाईदत्त तथा हीरादत्त प्रभृतयः संघर्षे प्राणान् त्यजन्तिस्म। 7 जुलाई 1855 स्रृष्टाब्दे महेशलालदत्त दिघ्घीवासि मृतः। सिद्धुः तं वधयतिस्म। पुनः गोड्डाया नायब परतापनारायणोऽपि हतः। सर्वत्र तस्य विजयपताकास्तु फरफरायते। आंग्लशासकेन विनिर्मितं डाकतारगृहोऽपि ध्वस्तम्। पीरपैंतीरेलवेस्टेशनोपरि तस्य पूर्णाधिकारः जातः। कदमसरस्थाने स मि. सी. मसाकनीलहे साहबं हत्वा अग्रेसरतिस्म। स तस्य भवनोपरि अधिकारः करोतिस्म।

11 जुलाई 1855 खृष्टाब्दे मि. जॉन फिल्ज पैट्रिकस्य पत्रानुसारेण ज्ञायते यत् विंशति सहस्रसैन्याः स्थानाम्बरं प्रति गच्छन्तिस्म। सिद्धोर्नेतृत्वे सिंघराय संतालः तथा गोचो मांझी अग्रे धावन्तिस्म। डाकतारभेदनात् कलौंगभागलपुर, राजमहल-बोरियो प्रभृतयः क्षेत्राः परस्पर-विसम्पर्किताः। परिपैंती स्टेशनोपरि तस्याधिकारः जातः। भागलपुर-राजमहलमार्गयोर्मध्ये यातायात-व्यवस्था अवरुद्धा जाता। न केवलं एतावत् अपितु परिपैंतीतः सकरीगली यावत् पथि संतालनामधिकारः भवन्तिस्म। 14 जुलाई 1855 खृष्टाब्दे मेजर वारो सर्वत्रारं प्रति प्रतिवेदनं प्रेषयत यत् अतिवृष्टिचक्रोपरान्तेऽपि संतालाः स्वराज्यस्थापनायै साफल्यन्तेस्म। तत्पश्चात् मेजरबारो रिपोर्टोपरि ब्रिगेडियर जेनरल लयेड संतालान् प्रतिरोद्धुं गच्छन्तिस्म।

16 जुलाई 1855 खृष्टाब्दे मेजर बारो सैन्यस्य संघर्षः संतालेन सह जातम्। अस्मिन् संघर्षे संतालाः क्वाटर मास्टर सर्जन्ट ब्रेडेन तथा तस्य पंचविंशतिसंख्यकान्। सैन्यान् हन्तिस्म। मेजर बारो पराजितः। तत्पश्चात् मेजरपदे सुखवारः युद्धयतेस्म।

विद्रोहीसंतालाः आंग्लभक्तान् लिटीपाड़ाया निवासी ईश्वरीभगतं। तिलकभगतञ्च मारयन्तिस्म। हिरनपुरस्य मानिक सुनकी अपि मृता घोषिता। मानसिंघपुरस्य त्रिभुवनसंतालोऽपि विद्रोहिणा सह मुक्ताभवत्। संतालाः संग्रामपुरस्य रहमदीमंडलं वधयन्तिस्म। स आंग्लशासकस्य गुप्तचरेति आसीत्।

अम्बरराज्यस्य तदानीन्तन दीवान जगवनरायः स्वराजभवनं रिक्तयतिस्म। 12 जुलाई 1855 खृष्टाब्दे सिद्धुः तमपि मारयतिस्म। तस्मिन् समये पाकुडस्य राज्ञी क्षेमसुन्दरी अपि

राजभवनं त्यक्त्वा कुलदेवतायाः मदनमोहनस्य विग्रेहण सह झिकरहाटीस्थानं गतवती। पाकुडराजवाडीपरि संतालाधिकारः जातः। ते पाकुडस्थ शोषकस्य महाजनस्य दीनदयालस्य वधं कुर्वन्तिस्म। वधयित्वा तस्य शिरं चौधरीपुष्करे कृत्वा पश्चात् निकटस्थ भगवतो शिवस्य मन्दिरे अर्पितवन्तासन्।

संतालाः बल्लभपुरपर्यन्तं चलन्तिस्म। तत्र ते कम्पनीराज्यस्य दलालं घनश्याममायरां तथा द्वौ मुस्लिमफकीरौ मारयन्तिस्म। महेशपुरे द्वे आंग्लनार्य्यौ श्रीमती थमासो-मिसपेलौ तथा त्रिणि आंग्लान् मि. हेमसे तथा तयो र्द्वे पुत्रौ निहन्तिस्म।

14 जुलाई 1855 खिष्टाब्दस्य विद्रोहे ते महेशपुरस्य राजवाटीमधीनयन्तिस्म। मि. टुगुड-ब्रिगेडियरजनरललयेडस्याधीने 'सेवन्थ' नैटिभ इन्फैन्ट्री पूर्वतः चतुश्शतसैन्येन सह तत्राऽसीत्। 15 जुलाई 1855 सृष्टाब्दे प्रातःकाले सिद्धुः कानु, चाँद तथा भैरवादयः आंग्लसैन्येन सह संघर्षयन्तिस्म। संघर्षे चत्वारः भ्रातरः अपघातिताः तथा द्वे शतौ संतालौ मृतौ। राजवाटीपरि आंग्लानामधिकारः जातः। त्रिंशतिसहस्रसंतालाः जंगले गुप्तवासं कुर्वन्तिस्म तथा छद्मयुद्धस्य व्यवस्थाया कार्यक्रमाः प्रारभन्तेस्म। चाँद तथा कानु रघुनाथपुरे पराजितौ। कानु जामताडाया निकटे ऊपरिबन्धेति नामके स्थाने आंग्लसैन्येन प्रतिबंधितम्। स जेले गतवान्। 24 जुलाई 1855 खिष्टाब्दे बरहेते सिद्धोर्कपटमित्रेन प्रयासेन स काराबद्धोऽभवत्। सम्पूर्णबरहेतोपरि आंग्लानामधिकारः भवतिस्म। संतालानां स्वाधीनताया सूर्यस्यावसानः एवं भवति।

संतालपरगनाया सम्पूर्णजिलायाः 14 नवम्बर 1855 खिष्टाब्दे मार्शल लॉ इति व्यवहृता। स्वतंत्रताया युद्धे काराबद्धाः संतालानां कृते कोर्टमार्शल आरब्धा। विद्रोहीसंतालानां कृते इति प्रचारिताः यत् दशदिनाभ्यन्तरे सर्वे आत्मसमर्पणं कुर्वन्तु। ते स्वान्दोलनं परित्यक्तुं न चिन्तयन्तिस्म। ते वाद्ययन्त्रस्य सहाय्येन स्वोद्गारान प्रकटयन्तिस्म। स्वतंत्रतायाः युद्धस्य वीराः सिद्धुः, कानु, चाँद, भैरवादयः मुक्तपरिवेशे मृत्युदण्डः प्राप्तवान्। स्वतंत्रतायाः वीराः मृताः।

एवम् 1857 खिष्टाब्दस्यान्तिमे भागे ते सर्वे मृताः घोषिताः। सम्पूर्णसंतालपरगनाया परिवेशे तेषां कृते श्रद्धाऽऽसीत्। वधनाडीहस्य वीराः अद्यापि जीवन्ति। अद्यापि जनाः तेषां स्मरयन्ति तथा आगामिनीकालेऽपि स्मरिष्यन्तीति इति विद्वांसः वदन्ति।

---

नाटकम्—

# त्यागपत्र-निरासम्

रामकिशोरमिश्रः

## अथ प्रथमोऽङ्कः

यस्याऽष्टौ मूर्तयः ख्याताः सं समर्थः कविर्विभुः।
व्यापयताद्रक्षँल्लोकान् कवीनाममृतं यशः ॥1॥

नान्द्यन्ते

**सूत्रधारः** — (मनसि सानन्दम्) अहो! सम्प्राप्तेयं नगरपरिषद्। परमयं ग्रीष्मसमयः। यदुष्णकालोऽस्मिन् स्वेदक्लिन्नशरीरोऽहमस्मि कार्यान्तरे व्यग्रमनाः। किमत्र करवाणि? यदियमर्धघण्टापूर्वमेवाऽत्र सङ्गता समुत्सुकाऽपि दृश्यते। अस्तु, सहचरीमाह्वयामि तावत्। (नेपथ्याभिमुखमवलोक्य) भद्रे! इतस्तावदेहि।

**निर्देशिका** — (नेपथ्ये) इयमायाति भद्र! (रङ्गं प्रविश्य) आज्ञापयत्वार्यः। को नियोगो भवतः?

**सूत्रधारः** — भद्रे! अद्याऽहमनया चिन्तया परिवृतोऽस्मि यदेनां जनसभां केन, नवेनोल्लासकरेणाऽभिनयेनाऽनुरञ्जयेयम्? तद्देय समुचितपरामर्शाऽसि सुभगे!

**निर्देशिका** — आर्य! चिन्तयाऽलम्। (सस्मितम्) भोः! भवतैव प्रथममाज्ञप्ताऽहं विविधग्रन्थप्रणेत्रा प्राप्तयशसा कविना श्रीरामकिशोरमिश्रेण ध्रुवमिति नाटकं विरच्य ग्रथितं त्यागपत्रनिराशं नाम नाटकमभिनेतुम्। तदुचितनेपथ्यरचनायां संलग्नाऽऽसम्। किमिदं विस्मृतं भवता?

**सूत्रधारः** — (साश्चर्यम्) अहो! सम्यग्बोधितोऽस्मि त्वया अस्मिन् क्षणे तु तदहं व्यस्मरं सुभगे। कुतः—

विस्मरामि स्वकार्याणि तथा ते सुन्दराकृतौ।
एष विद्योत्तमावाण्यां पाण्डित्यं पण्डितो यथा ॥2॥

(इति तौ निष्क्रान्तौ)

[विद्योत्तमया सह विदुषां शास्त्रार्थः]

[ततः प्रविशति काशीनरेशः पुत्र्या विद्योत्तमया सह विभवतश्च परिवारः।]

(सर्वे यथास्थानमुपविशन्ति)

**दौवारिकः** — (प्रणत्य) जयतु जयतु महाराजः! पण्डितप्रवरः श्रीभैरवनाथो द्वारि तिष्ठति। दासोऽयं कामाज्ञां प्रतिपालयतु।

काशिराजः — गच्छ, गच्छ, सादरं तमन्तः प्रवेशय।

दौवारिकः — यदाज्ञापयति देवः। (गत्वा पुनर्भैरवनाथेन सह प्रविश्य) एष राजन्!

काशिराजः — (सिंहासनादुत्त्थाय) करबद्धोऽहं प्रणमामि पण्डितवरम्। समलङ्क्रियतामासनमिदम्।

भैरवनाथः — (हस्तमुद्यम्य) स्वस्ति स्यात् ते राजन्! (उपविशति)।

काशिराजः — कथय भगवन्! स्वागमनहेतुम्। कामहं सेवां करवाणि ते।

भैरवनाथः — राजपुत्र्या सह शास्त्रार्थसेवां विहाय न कामपि वाञ्छामि राजन्!

काशिराजः — मन्त्रिन्! पण्डितप्रवरस्य शास्त्रार्थकामनामुद्दिश्य मे दुहितरं प्रतिबोधय समवेतानेतांश्च सभालोकान्।

मन्त्री — अस्मदीयाः प्रियाः प्रजाः। भोः सभ्या लोकाः! पण्डिताश्च! भवन्तस्तु सुविदिताः सन्ति सद्राज्ञः सुपुत्री पण्डितपूज्या विद्योत्तमा यस्माद् विदुषः पराजयिष्यते, तेनैव सा विवाहिता स्यादिति तस्याः सुस्थिरा प्रतिज्ञा। प्रणेस्मिन् प्रवृत्ताया विद्योत्तमायाः षण्मासा व्यतीताः, परन्न कोऽपीदृशः पण्डितः प्राप्तः, येनाऽस्याः सन्तुष्टिः कृता भवेत्। किन्त्वद्य शास्त्रार्थाय यः पण्डितः समागतः, सोऽस्ति भारतस्य मान्यो विद्वानाचार्यभैरवनाथः। आशासे, पिपूर्यादयं राजसुतेच्छाम्, अन्यथा पराजितोऽयमपि तत्सेवां करिष्यतीति पणस्तस्याः। अतो द्वौ शास्त्रार्थं प्रारभेते। अवहिताः शृण्वन्तु भवन्तः।

[इत्युक्त्वा स स्वस्थानं गृह्णाति, विद्योत्तमा भैरवनाथश्च शास्त्रार्थायाऽऽसने गृहीतौ।]

विद्योत्तमा — आचार्यवर! जीवनेऽस्मिन् कर्मणः प्राधान्यं भाग्यस्य वा?

भैरवनाथः — भाग्यस्य प्रधानता राजपुत्रि!

विद्योत्तमा — कथङ्कारम्?

भैरवनाथः — कृतसर्वकर्मणोऽपि गुरोर्वसिष्ठस्य लग्नं वैपरीत्यमितम्। राजतिलके बाधाऽभूत्। रामोवनं जगाम। एतत्सर्वं किम्? भाग्यस्य गतिचक्रमेव राजपुत्रि! अतो भाग्यमेव मुख्यम्।

विद्योत्तमा — (समुखसङ्कोचम्) नहि, नहि पण्डितप्रवर! भाग्यं मुख्यं नास्ति!

भैरवनाथः — कथन्न मुख्यं तत्?

विद्योत्तमा — श्रूयतां श्रीमन्! सीतां विवाहयितुमनेके हि राजानो गताः, किन्तु..., येन कर्म कृतम्, तेन परिणीता सा। यदि रामस्य भाग्यं बलवदासीत्, तत्तेन धनुर्भङ्गमन्तरेण कथन्न प्राप्ता सा? इयं कर्मलीला।

भैरवनाथः — (समुखसङ्कोचम्) किन्तु......., राजपुत्रि!

विद्योत्तमा — किन्तु..., किम्? कथ्यताम्, भवन्तोऽत्र किमर्थमागताः?

भैरवनाथः — शास्त्रार्थमाचरितुम्।

विद्योत्तमा — शास्त्रार्थेन तात्पर्यं भवतां मया सह वार्तालापः स्यात्, नाऽन्यत्किमपि? एष

कर्मणो विषयः। यदि भवन्तो भाग्यवन्तोऽभविष्यन्, तदहं स्वयमेव भवदाश्रमं प्राप्स्यम। नासीच्चावश्यकता काप्यत्र भवदागमनस्य, किन्तु भवन्तस्तु मां पत्नीमवाप्तुं शास्त्रार्थमाचरन्ति। अतः कर्मण्येव भवतां विश्वासः, न तु भाग्ये। (सस्मितम्) कथ्यताम्, युक्तमुक्तन्न?

भैरवनाथः – (सनिश्वासम्) आम्! पराजयमहं मन्ये।

विद्योत्तमा – (सस्मितम्) तत्सेवाकार्याय...,

भैरवनाथः – उद्यतोऽस्मि।

(विद्योत्तमाया जयघोषः सर्वत्र गुञ्जति।)

पटीक्षेपः।

[ततः प्रविशति चतुष्पादिकासनस्थ आचार्यशिवनाथः।]

भैरवनाथः – (प्रविश्य) गुरुवर्यं प्रणमामि। (करबद्धः स पादयोः पतति।)

शिवनाथः – अपि त्वमसि कुशली भैरव?

भैरवनाथः – (सदुःखम्) कुशलं क्व गुरुदेव? अस्या विद्योत्तमायाः पाण्डित्यराज्ये पण्डितानां कुशलं क्व?

शिवनाथः – पाण्डित्यराज्यन्तु पण्डितानामेव भवति। सापि पण्डिता। परमियान्मदीयो विश्वासो नाऽऽसीत्, यत्त्वमपि पराजयं स्वीकरिष्यसि।

भैरवनाथः – पराजयस्तु भवति गुरुदेव! तं स्वीकरोति कः?

शिवनाथ – (सभ्रूभङ्गम्) आः। पण्डितानामेतावान्महानपमानः। (उत्त्थाय सकोपम्) मा चिन्तय भैरव! मा चिन्तय। अस्याऽपमानस्य सापि फलं भोक्ष्यते। तामहं प्रतीकरिष्ये। (श्मश्रुकरेण संस्पृशति।)

पटीक्षेपः। इतिप्रथमोऽङ्कः।

## अथ द्वितीयोऽङ्कः

[विद्योत्तमा कालिदासयोः शास्त्रार्थो विवाहश्च]

(नेपथ्ये 'कट् कट्' इति शब्दो भवति।)

शिवनाथः – (प्रवश्यि) वत्स! किमिदं करोषि?

मूर्खः – (विहस्य) किमिदं न पश्यसि? यदहमिन्धनाय वृक्षशाखाभवखण्डयामि।

शिवनाथः – (साश्चर्यम्) पश्यामि वत्स! त्वं तु मूखोऽसि, यां शाखामारूढोऽसि, तामेव खण्डयसि।

मूर्खः – गच्छ, गच्छ! (सक्रोधम्) त्वं मां मूर्खं कथयसि! सर्वे मां मूर्खमेव कथयन्ति, परं किं तवाऽनेन?

शिवनाथः – (सविनयम्) वत्स! ममैकं कार्यं त्वया।

मूर्खः — (साश्चर्यम्) मया?
शिवनाथः — आं वत्स!
मूर्खः — तदहं नीचैः कूर्दय?
शिवनाथः — नहि, नहि, नीचैर्न कूर्देथाः, शनैः शनैर्वृक्षादवतर।
मूर्खः — अवतरणे बिलम्बः स्यात्तदहं नीचैः कूर्दे, गृहाण माम्। (तथैव करोति।)
शिवनाथः — (स्कन्धे हस्तं धृत्वा) सम्प्रति क्व निवससि? वत्स! कथय।
मूर्खः — राजकुमारीविद्यालये श्रीमन्!
शिवनाथः — यत्र श्रीविश्वनाथ आचार्यो वर्तते वत्स!
मूर्खः — आं श्रीमन्!
शिवनाथः — अस्तु, त्वं किन्नामासि वत्स! कथय, क्व ते पितरौ वसतः कञ्च वंशमलङ्कुरुतः?
मूर्खः — किं भवान्मामध्यापयिष्यसि?
शिवनाथः — तवाहं विवाहं कारयिष्यामि वत्स!
मूर्खः — मम विवाहम्? केन सह?
शिवनाथः — (सस्मितम्) कया सहेतिवाच्यम्, कथं केन सहेति? त्वन्तु न केवलो मूर्खोऽसि, अपितु मूर्खराजोऽसि।
मूर्खः — (सहर्षम्) इदमेवाहं पृच्छामि गुरुदेव! कया सह मम विवाहो भावी?
शिवनाथः — (किञ्चिद्विहस्य) राजकुमार्या सह।
मूर्खः — (साश्चर्यम्) राजकुमार्या सह!
शिवनाथः — आं वत्स!
मूर्खः — सा तु पण्डिताऽस्ति गुरुदेव!
शिवनाथः — सा त्वां विद्वांसमपि करिष्यति वत्स!
मूर्खः — सा मां विद्वांसमपि करिष्यति?
शिवनाथः — कथन्न? पत्नी स्वपतिं विद्वांसमपि समीहते।
मूर्खः — तदहमुद्यतोऽस्मि गुरुदेव!
शिवनाथः — पितृविषये न किञ्चिदपि कथितं त्वया।
मूर्खः — (सदुःखम्) तद्विषये किं कथयेयम्? तौ तु मृतौ मे पञ्चमे वर्षे। तौ भारद्वाजगोत्रीयौ मिश्रवंश्यौ प्रयागवासिनावास्ताम्। माता ममाऽऽसीत्काली, पिता च कालीनाथः, माञ्च तौ कालीदासं कथयतः स्म। परमत्र सर्वे मां मूर्खः कथयन्ति गुरुदेव!
शिवनाथः — आगच्छ वत्स! तवाहं विवाहं कारयिष्यामि। तत्र त्वया तूष्णीशीलेन भाव्यम्। सङ्केतोत्तरं च सङ्केतेनैव प्रदेयम्। एहि त्वां स्नापयित्वा सुन्दरवस्त्राणि परिधाप्य च राजकुमारीपार्श्वं चलावः।
मूर्खः — चल्यतां गुरुदेव!

[इति तौ निष्क्रान्तौ।]

पटीक्षेपः।

[ततः प्रविशति राजसभायां काशिराजः पुत्र्या विद्योत्तमया सह सपरिवारः।]

काशिराजः – (सस्मितम्) पुत्रि विद्योत्तमे! कथय, त्वया सार्धमद्य कः शास्त्रार्थं करिष्यति?

विद्योत्तमा – न ज्ञायते मया तात! मम त्वयं सर्वजनीनो घोषो यद् यो मां विवाहयितुमिच्छेत्, स मया सह शास्त्रार्थं कुर्यात्।

काशिराजः – अभीप्सितवरं प्राप्तुं त्वया त्याज्योऽयं प्रणः पुत्रि!

विद्योत्तमा – नैवं पिताः! श्रूयताम्–

तात! मम प्रणे पूर्णे विवाहो मे भविष्यति।
नो चेत्कश्चिद् बुधो भूमौ तत्राऽलं चिन्तयाऽनयां ॥1॥

काशिराजः – अस्तु, यथेच्छमाचर।

प्रतीहारः – (प्रविश्य) जयतु जयतु महाराजः। आचार्यः शिवनाथः सशिष्यो द्वारि तिष्ठति। किमाज्ञापयति देवः।

काशिराजः – सादरं प्रवेशय शीघ्रमाचार्यपादान्।

प्रतीहारः – यदाज्ञापयति देवः। (गच्छति स आचार्यं प्रवेश्य निष्क्रामति।)

काशिराजः – (साञ्जलिः) प्रणामोऽस्तु मे सादरमाचार्यपादयोः।

शिवनाथः – (हस्तमुद्यम्य) राजन्!

कुशलमस्तु गृहे तव सर्वदा,
भवतु नो विभवैः रहिता प्रजा।
जगति कोऽपि न ते ह्यहितो भवेत्,
अनुदिनं जयतात्तव जीवितम् ॥2॥

विद्योत्तमा – सर्वतः प्राप्तयशस आचार्याय विपश्चिते।
काशिराजस्य पुत्रीयं विद्योत्तमा प्रणमति ॥3॥

शिवनाथः – राजपुत्रि!

समग्रशास्त्रज्ञमजातदुर्हृदम्,
परार्घ्यवंशोद्भवमाप्तवाङ्मुखम्।
सुदर्शनं दूरदृशं महाकविम्,
निजानुरूपं पतिदेवमाप्नु हि ॥4॥

काशिराजः – (सादरं हस्तेन निर्दिश्य) आचार्यवर! समलङ्क्रियतामासनम्।

[आचार्यः शिष्यश्च पृथक्पृथगासन्द्यामुपविशतः।]

काशिराजः – (सविनयम्) कां सेवां कर्तुमर्हति दासोऽयमाचार्यवर्याणाम्? तथाऽऽज्ञापयन्तु श्रीमन्तः।

शिवनाथः – शास्त्रार्थसेवैव प्रचलति राजसभायामिदानीम्! राजन्! तदर्थमागतावावाम्। यतोहि–

विद्वांसो बहवो राजन्! तव पुत्र्या पराजिताः।
किमेषा पतिहीना स्यादपूर्णया प्रतिज्ञया ॥5॥
युवा प्रौढश्च वृद्धो वा नार्याः कोऽपि पतिर्भवेत्।
पतिं विना स्त्रियो लोके मानं न कुरुते जनः ॥6॥

राजन्! सभायां शास्त्रार्थसेवा,
करोति सम्प्रति बुधजातिमानम्।
तदर्थ भावामत्राऽऽगतौ स्वः,
कथयस्व शास्त्रार्थकृते स्वपुत्रीम् ॥7॥

काशिराजः — अयि पुत्रि विद्योत्तमे! स्वकीयं प्रणमद्य पूरय साकमाचार्येण।

विद्योत्तमा — (साश्चर्यम्) किमस्मिन् पश्चिमे वयस्यपि न तृप्तिं गता कामवासनाऽऽचार्यस्य? यो मामष्टादशवर्षदेशीयां शास्त्रार्थबलात् पत्नीत्वेन ग्रहीतुमिच्छति।

काशिराजः — भवान् शास्त्रार्थं चिकीर्षति किमाचार्य!

शिवनाथः — मैवं राजन्! नाहं राजपुत्र्या उज्ज्वलभविष्यमन्धकारं प्रति नेतुमिच्छामि। इयन्तु मम पुत्रीसमा वर्तते। राजपुत्रि! मदीयमेनं प्रियं शिष्यमेकविंशतिवर्षीयं कालिदासनामानं स्वशास्त्रार्थसहचरं विधेहि।

विद्योत्तमा — उद्यताऽस्मि तदर्थमाचार्यपादाः।

शिवनाथः — परमस्त्येकः पणः शारदासुते!

विद्योत्तमा — स क आचार्यवर्य!

शिवनाथः — शास्त्रार्थस्त्वया मौनमवलम्ब्य विधेयः।

विद्योत्तमा — कथमेतत्?

शिवनाथः — अद्याऽस्य मौनव्रतम्, तस्य सुरक्षणाय पुत्रि! अस्य प्रणपूरणेन समं त्वं स्वप्रतिज्ञामपि पूरय।

विद्योत्तमा — अद्य यद्यस्य मौनव्रतमाचार्य! तदावां श्व एव शास्त्रार्थमाचरिष्यावः।

शिवनाथः — समयोऽस्ति सर्वथा बलवान् राजपुत्रि! अद्य त्वराया एवं स्थितिर्नः समक्षम्, यदयं श्वो देशाटनाय गन्ता, तदद्यैवं सर्वविधः शास्त्रार्थो भवितुमर्हति। अन्यथा स्वपराजयं स्वीकुर्याः।

विद्योत्तमा — (ससम्भ्रमम्) पराजयं कथमहं स्वीकुर्याम्? किमहं शास्त्रार्थाय नालम्?

शिवनाथः — तत्स्वीक्रियतामभाषणम्। सेङ्गितस्त्वया शास्त्रार्थो विधेयः।

विद्योत्तमा — (मनसि) यद्यहं मौनशास्त्रार्थं नाचरामि, तन्मां पराजितां मंस्यन्ते सर्वे जनाः। यो मया शास्त्रार्थघोषोऽकारि, तत्र न कोऽपि प्रतिबन्धो गृहीतः। तत्किं निषेधयेयम्? नैव, नैव। (प्रकाशम्) आचार्यवर! स्वीकुर्वे मौनशास्त्रार्थमपि, परमस्त्येकः पणः।

शिवनाथः — कः स राजसुते!

विद्योत्तमा — शास्त्रार्थे मध्यस्थो भवानेव निर्णायकोऽपि भवेत्। प्रष्टुराशयमुत्तरितुरभिप्रायं च भवानेवं सुस्पष्टीकरोतु वाचा। तत्राऽसमर्थश्चेत्, शिष्यपराजयं मन्वीत।

शिवनाथः — स्वीकृतोऽयं पणः। सङ्केतेन गृह्यतां स्वविषयः।

विद्योत्तमा — केवलौ द्वौ मे प्रश्नौ भविष्यतः। यदि तयोरुत्तरमहं समुचितं प्राप्स्यामि, तदहं स्वां पराजितां मंस्ये। इत्युक्त्वा सा कालिदासं प्रत्येकामङ्गुलिं सङ्केतयति, किन्तु कालिदासस्तां प्रति द्वे अङ्गुली निर्दिशति। जनतासु तदा भवति सहर्षस्तालीवादः।

शिवनाथः — वत्से! सङ्केतितं त्वया यदङ्गुलेरेकत्वम्, तेन ब्रह्मैक्यमिति तवाशयः। परं तस्य भेदद्वयं निराकारं साकारं चेति प्रकटितं मे प्रियशिष्येण द्वे अङ्गुली दर्शयता। अस्ति काप्यत्र विप्रतिपत्तिस्ते विद्योत्तमे!

विद्योत्तमा — आचार्यवर! नात्र किमपि शङ्के। प्रशंस्योऽयमुत्तरदाता तव शिष्यः।

शिवनाथः — अतः परं त्व द्वितीयोऽपरः प्रश्नः कः?

विद्योत्तमा — अयि पण्डितयुवक! मदीयोऽयं द्वितीयप्रश्नः।

[इत्युक्त्वा विद्योत्तमा कालिदासं प्रति स्वहस्तमङ्गुलिपञ्चकं प्रसार्य दर्शयति, किन्तु कालिदासस्तां प्रति मुष्टिं निर्दिशति। जनतासु तदानीमपि भवति सहर्षस्तालीवादः।]

शिवनाथः — पुत्रि! सङ्केतितं त्वया यदङ्गुलिपञ्चकं प्रसार्य, तेन किं पञ्चभूतानि पृथक्पृथक् सन्तीति तवाऽऽशयः। परमुत्तरस्वरूपा मुष्टिः प्रदर्शिता मम शिष्येण। मुष्टिप्रदर्शनात्तस्याऽयं भावो यत्तेषां पञ्चभूतानां संग्रह एवं निर्माति मानवशरीरं तथा, यथाऽङ्गुलिसंग्रहेण निर्मीयते मुष्टिः। एकत्वं गतैस्तैः पञ्चभिर्भूतैर्जीवनं सञ्चार्यते, पृथक्पृथग्भूतैस्तु पञ्चत्वं प्राप्यते। अत एकतायामेव शक्तिर्वर्तते, न तु पार्थक्ये। किमत्र विशङ्कते तव हृदयम्।

विद्योत्तमा — नात्र किमपि शङ्के पण्डितगुरो!

शिवनाथः — भवत्या स्वप्रश्नयोरुत्तरे विज्ञाते न वा?

विद्योत्तमा — सम्यग्ज्ञाते मया ते। अतो गुरुवर! स्वपराजयं मन्यमानाऽहं भवदीय-शिष्यस्योत्तरे प्रशंसामि। अयमस्ति प्रकाण्डविद्वान्, नाऽत्र सन्देहः।

[कालिदासस्य जयघोषैः सर्वत्र गुञ्जति रङ्गो विवाहश्च सम्पद्यते।]

सभाजनाः — साधु साधु राजन्! कालोऽयम्, बहुसमयानन्तरमायातः।
आस्माकीनाः शुभाः कामनाः नवदम्पतीभ्यां यदा भवन्तु ॥8॥
एनयोः कर्ममार्गोऽयं यथेष्टं सुखदो भवेत्।
परस्परं प्रवर्तेतां जीवने सहयोगिनौ ॥9॥

पटीक्षेपः। निष्क्रान्ताः सर्वे।

इति द्वितीयोऽङ्कः।

# अथ तृतीयोऽङ्कः

पतिपत्नीप्रथमनिशायां कालिदासस्य गृहान्निस्सारणम्।

[राजकुमार्या विद्योत्तमायाः शयनकक्षे तस्याः सौभाग्यरात्रौ पति-सङ्गमात्प्राक् सख्यः परस्परं मनोविनोदं कुर्वन्ति।]

एका – राजकुमारि! अद्य तु तव मनोरथः पूर्णतामेष्यति।

द्वितीया – पतिसङ्गमो भविष्यति।

तृतीया – साऽधरं पास्यति, कपोलौ चुम्बिष्यति।

अन्या – पाययिष्यति स प्रेमरसमिति भण।

विद्योत्तमा – किं कथयत यूयम्? किं युष्मान् लज्जापि न बाधते?

अपरा – अद्य रात्रौ तु लज्जापि निर्लज्जा भविष्यति पतिसङ्गमेन।

इतरा – अयि भो सखि! स इत एवाऽऽगच्छति पतिदेवः। राजकुमारि! त्वमधुना चिरप्रतीक्षितं मनोरथं पूरय। पतिरसेन स्वतृषां तर्पय शमय च।

[सर्वा सख्यो गच्छन्ति। राजकुमारीपर्यङ्के स्थिताऽधोमुखी तिष्ठति।]

पटीक्षेपः।

[कालिदासः प्रविश्य पर्यङ्काद‌धस्तलस्थायामासन्द्यामुपविशति।]

विद्योत्तमा – तत्र नोपविशतु भवान्। अत्रागत्य मे पर्यङ्कमलङ्करोतु देवः। (सा पर्यङ्कादवतरति।)

कालिदासः – नहि, नहि, भवती तत्रैवोपविशतु। नैवावतरत् पर्यङ्कादधः।

विद्योत्तमा – अद्य भवन्तं विना तत्राहं कथमुपवेष्टुमर्हामि? भवानप्यत्राऽऽगच्छतु।

कालिदासः – अयं पल्यङ्कस्तु भवत्या एव। तत्कथं न भवती तत्रोपविष्टुमर्हति?

विद्योत्तमा – अयं तु सङ्गमपर्यङ्को देव! भवन्तं विनाऽद्य कथमस्य शोभा?

कालिदासः – नहि, भवत्येव तत्र पल्यङ्के शयीत। अहमस्मादधःकुट्टिमे शये। (आसन्द्या अवतीर्य कुट्टिमे शेते।)

विद्योत्तमा – अहो! किमिदं भवान् करोति? आगच्छतु मया सह पर्यङ्कम्। (तस्य हस्तं गृहीत्वा कर्षति।)

कालिदासः – भवती तत्रैव तिष्ठतु। अहमत्रैव शयिष्ये। (कुट्टिमे तिष्ठति।)

विद्योत्तमा – किमपराद्धं मया? यद्‌भवानत्र शयिष्यते। अहमपि भवतः पार्श्वमायामि।

[तत्र गत्वोपविशति।]

कालिदासः – न कोऽपि भवत्या अपराधः। अहं तु निरन्तरं भूतले शये। तदत्रैव शयिष्ये। भवती तत्र शेताम्।

विद्योत्तमा — अद्याऽऽवयोः सौभाग्यरात्रिः। तद्भवान्मया सह शयीत। अस्यां सङ्गमनिशायां मां प्रति स्वदृशं क्षिपतु। पश्यतु मम नयनयोः किमस्ति? (कामोन्मत्ता पश्यति तम्।)

कालिदासः — किमस्ति भवत्या नेत्रयोः? नाहं किमपि पश्यामि। कथय, तत्र किमस्ति?

विद्योत्तमा — किं भवतः कामशास्त्रं नाधीतम्?

कालिदासः — नैव, भवतः पिपठिषामि।

विद्योत्तमा — भवन्तमहं पाठयितुमाह्वयामि, परं भवांस्तु तत्र पर्यङ्कं न गच्छति। आगच्छ मया सह पर्यङ्कम्, त्वां पाठयितुमाह्वयामि।

कालिदासः — मां पाठयितुमाह्वयसि? तच्चल्यताम्, अहमपि चलामि।

[इति श्रुत्वा विद्योत्तमा प्रसीदति। कालिदासस्य हस्तं गृहीत्वा याति। द्वौ तत्रोपविशतः।]

विद्योत्तमा — अथ भवान् कामपाठं पठतु प्रियतम्!

कालिदासः — पाठय प्रिये! नाधीतं किमपि मया।

विद्योत्तमा — किं कामशास्त्रं नाधीतं त्वया?

कालिदासः — नहि प्रियतमे!

विद्योत्तमा — तदद्य प्रथमं तस्य पाठं पठिष्यसि। कथय, भोजनं कृतं न वा?

कालिदासः — भोजनं तु कृतं मया, परं पयो न पीतम्।

विद्योत्तमा — तदेहि प्रियतम! मे पार्श्वम्। पयः पिब। एतौ मम पार्श्वे द्वौ पयः कुम्भौ स्तः। इमौ गृहीत्वा पयः पिब।

कालिदासः — क्व पयः कुम्भौ? नैव दृश्येते।

विद्योत्तमा — इतः पश्य मां प्रियतम! इमौ स्तः। (वक्षः सङ्केतयति।)

कालिदासः — एतत्तु भवदीयवक्षःस्थलम्। अत्र क्व पयः कुम्भौ?

विद्योत्तमा — एतौ पयः कुम्भौ न जानासि? सर्वलोक एतौ पिबति। किमेतौ न पास्यसि? (हस्तेन स्वस्तनौ सङ्केतयति।)

कालिदासः — इमौं तु तव स्तनौ। अत्र जलं क्व? अहं तु पिपासुरस्मि।

विद्योत्तमा — अत्र स्थितेन रतिजलेन पिपासां शमय प्रियतम!

कालिदासः — मां पयः पायय प्रिये!

विद्योत्तमा — एतौ गृहाण। प्रेमपयः पिबं। शमय कामतृष्णाम्।

[नेपथ्ये—उष्ट्ररवो भवति।]

विद्योत्तमा — अयं को नदति?

कालिदासः — उट्र।

विद्योत्तमा — किम्वुक्तम्?

कालिदासः — उट्रः।

विद्योत्तमा — मूर्धन्यषकारः क्व गतः?

कालिदासः — अहं न जाने।

विद्योत्तमा – किं भवानुष्ट्रशब्दं न जानाति?

कालिदासः – नैव, अहम् उट्रं वदामि।

विद्योत्तमा – कथं भवान् उट्रं वदति? सिद्धिं करोतु।

कालिदासः – अहं सिद्धिमपि न जानामि।

विद्योत्तमा – किं सिद्धिमपि न जानासि? किं त्वया व्याकरणमपि नाधीतम्?

कालिदासः – नैव।

विद्योत्तमा – तद् दर्शनं कथमधीतं त्वया?

कालिदासः – मया तु न किमपि शास्त्रमधीतम्।

विद्योत्तमा – (सविनयम्)

लज्जां न कुर्याः प्रिय! रात्रिरेषा
वार्ताप्रसारेण हि यापनीया।
जानामि ते दार्शनिकेङ्गितैस्तै–
र्वैवाहिकोऽयं क्षणिकोऽस्ति मोदः ॥1॥

कालिदासः – किं कथयसि? लज्जां न कुर्वे प्रिये! सत्यं वदामि।

विद्योत्तमा – तत्किं त्वमधीतो नासि?

कालिदासः – नाधीतोऽस्मि। विद्यापाठनाय मम विवाहस्त्वया सह कारितः। तदर्थं मां प्रिये! पाठय किमपि।

विद्योत्तमा – हासं न कुरु दर्शनशास्त्रविद्वन्!

आगच्छ पार्श्वं, पठ कामपाठम्।
यूना हि पत्या तु कुचौ स्वपत्न्याः,
विमर्दनीयौ भवतः कराभ्याम् ॥2॥
एतौ हि सर्वः पिबतीह लोकः,
प्रेम्णा गृहीत्वा स्वकरद्वयेन।
एहि त्वमग्रे हि कुचौ गृहाण,
पीत्वाऽधरं मे प्रणयं कुरुष्व ॥3॥

कालिदासः – प्रथमं प्रिये! त्वमक्षरज्ञानं कारय। ततोऽहं ते कामपाठं पठिष्यामि।

विद्योत्तमा – तत्किं त्वमसि स मूर्खः, यो यौवने पतिपत्न्योः सामान्यव्यवहारमपि न जानाति।

कालिदासः – आम्, मां मूर्खमेव कथयन्ति सर्वे जनाः।

विद्योत्तमा – हासं करोषि प्रिय! किं ब्रवीषि?

सत्यं वचस्ते, किमु तद् यदुक्तम्?
मूर्खोऽसि, विश्वासमहं न कुर्वे,
प्रश्नोत्तराणि त्वमदाः कथं मे? ॥4॥

कालिदासः – तत्र किमासीत्? ममैकाक्षिस्फोटनाय त्वया पूर्वमङ्गुलिरेका प्रदर्शिता, तदहं तवाऽक्षिद्वयस्फोटनार्थमङ्गुलिद्वयमदर्शयम्।

विद्योत्तमा – (साश्चर्यम्) द्वितीयप्रश्नविषये च?

कालिदासः – यदा त्वं चपेटान्मम ताडनाय पञ्चाङ्गुलिहस्तमदर्शयस्तदाऽहं त्वां मुष्टिमदर्शयम्।

विद्योत्तमा – (साश्चर्यम्) तत्त्वं नितान्तमूर्खोऽसि! (सक्रोधम्) शृणु–

रे मूर्ख! शय्यां त्यज, गच्छ दूरम्,
योग्योऽसि न त्वं मम पार्श्वमेतुम्।
राज्ञः सुताऽहं विदुषी प्रसिद्धा,
तस्याश्च पत्या विदुषैव भाव्यम् ॥5 ॥

कालिदासः – (तारस्वरेण) पतिस्तवाऽहम्, पतिस्तवाऽहम्। (दैवयोगात् किञ्चिज्ज्ञानं प्राप्य) प्रिये! रुष्टा मा भूः। शृणु–

स्वामी तवाऽहं, मम साऽसि पत्नी,
यस्या विवाहो हि मया सहाऽभूत्।
पत्युस्त्वया मानततिर्विधेया,
पत्न्याः पतिर्वै परमेश्वरोऽस्ति ॥6 ॥

विद्योत्तमा – (सक्रोधम्) मूर्खोऽसि, सामान्यबुधोऽपि न त्वम्,
तत्पण्डितैर्मौनबुधः कृतोऽसि।
तत्रैव गच्छेर्न्यवसो हि यत्र,
निर्गच्छ कक्षाच्छयनादधस्त्वम् ॥7 ॥

कालिदासः – (सस्मितम्) रोषं न कुरु प्रिये! शृणु–

त्वां प्रेक्ष्य पार्श्वे हृदये मदीयें,
सञ्जायते चञ्चलताऽपि कापि।
त्वं सुन्दरी मां प्रतिभासि जाये!
आयाहि मां, पाठय कामपाठम् ॥8 ॥

विद्योत्तमा – (सकोपम्) त्वमतीवनिर्लज्जोऽसि, यदधुना कामविषयमालपसि। गच्छ त्वमितो मे शयनात्। त्वां मूर्खमहं पतिं न मन्ये।

कालिदासः – प्रिये! त्वं मदीया विवाहिता जायाऽसि। शृणु–

दूरं न गच्छेः प्रणयस्य काले,
नायासि पार्श्वं हि कथं ममाऽऽर्ये!
सङ्गो मदीयस्तव जीवनस्य,
यस्मादृते सार्थकता न ते स्यात् ॥9 ॥

विद्योत्तमा – (सरोषम्) गच्छेस्त्वं मम कक्षात्। त्वं मे न पतित्वयोग्योऽसि। प्रतिज्ञानुसारं नाऽभून्मे पाणिग्रहणम्। शृणु–

तेषां बुधानां प्रतिशोध एष,
मन्ये हि मत्तः प्रपराजिता ये।

तैः कारितो मौनबुधेन सार्धम्,
यो मे विवाहस्तमहं न मन्ये ॥10॥

कालिदासः – प्रिये! प्रसीद, रोषं मा गाः। मम वचनं शृणु–
त्वं भारतीयाऽसि, पतिव्रताऽसि,
पत्न्याश्च धर्मं परिवेत्सि सम्यक्।
मन्यस्व मां तव पतिरस्मि कान्ते!
तस्मादवज्ञां न धवस्य कुर्याः ॥11॥

विद्योत्तमा – (सकोपम्) नाऽहं तव वचनं शृणोमि। त्वमधुना मम वचनं शृणु–
कान्ते! प्रिये! मां गदितुं न योग्य–
स्त्वं मूर्ख! मन्यस्व न मां स्वपत्नीम्।
गच्छेस्त्वमस्माच्छयनस्थलान्मे,
मन्ये न मूर्खं त्वामहं पतिं स्वम् ॥12॥

कालिदासः – मूर्खोऽस्मि नाहं, मयि सोऽस्ति बोधः,
येनेह सांसारिककर्म कुर्वे।
किन्ते प्रियं तत्करवाणि कान्ते!
कान्तोऽस्मि तेऽहं, कुरु तस्य मानम् ॥13॥

विद्योत्तमा – (जिज्ञासया सह) कथय–
मूर्खोऽसि न त्वं यदि, वेदयेर्माम्;
किं वृद्धिरादैच् विदधाति कार्यम्?
वागीशसिद्धिं वद सूत्रमुक्त्वा,
कः सन्धिविच्छेद उमेशशब्दे ॥14॥

कालिदासः – प्रिये!
सूत्रैर्न सांसारिककर्मसिद्धिः,
तस्मात्तदध्यैषि न शब्दशास्त्रम्।
जानामि किञ्चित्स्वकृतानुरूपम्,
तद् ब्रूहि किन्ते। प्रियकर्म कुर्याम्? ॥15॥

विद्योत्तमा – (सक्रोधम्) शृणु रे मूर्ख!
यः शब्दशास्त्रं न च वेदविद्याम्,
काव्यान्यधीते न च योऽर्थशास्त्रम्।
लोकेऽस्ति तुल्यः पशुना जनः स,
घासं न यः खादति तादृशस्त्वम् ॥16॥

कालिदासः – प्रिये! यत्किञ्चिद् भूतम्, तत्सर्वं सहस्व। त्वं भारतीयनारी वर्तसे। तदनुसारमेव सदाचर। प्रसीद, न कुरु कोपम्। शृणु मे वचनम्–

विज्ञोऽहमज्ञोऽस्मि च वाऽस्मि सुज्ञो
विद्वानहं वा परमोऽस्मि मूर्खः।
कोऽप्यस्मि यः सोऽस्मि पतिस्तवाऽस्मि,
मान्यस्त्वया जीवनसाधकोऽहम् ॥17॥

**विद्योत्तमा** – शृणु रे मूर्ख! भारतीयनारी त्वहमवश्यमस्मि, परं या मया प्रतिज्ञा कृता, तदनुसारमेव पतिं मंस्ये, न तु त्वाम्, यस्य सामान्यज्ञानमपि नास्ति। तदितो मम कक्षाद् बहिर्गच्छ। श्रुतं न? गच्छ, गच्छ, नाऽहं ते पत्नी।

**कालिदासः** – इतोऽहं गमिष्यामि प्रिये! त्वं मे पत्नी। अहं ते पतिरस्मि। पतिः पत्नी च द्वावपि सहैव वसतः, नैव पृथक्। अतो मयैव सह निवस सुभगे।

**विद्योत्तमा** – (सक्रोधम्)

कक्षाद् द्रुतं निस्सर, मूर्ख! मन्ये,
न त्वां पतिं मे शयनं जहीहि।
नो यास्यसि त्वं, नृपमाह्वयामि,
निर्वासनं स्यात्तव येन देशात् ॥18॥

कथय, गच्छसि न वा। शब्दान् कृत्वा किं राजपुरुषान् आकारयामि, ततो यास्यसि?

**कालिदासः** – इतो गच्छामि प्रिये! परमहं विद्वान् भूत्वा निवर्तिष्ये, तदाऽहं त्वया पतिरङ्गीकर्तव्य एव।

[पटीक्षेपः। निष्क्रान्ताः सर्वे।]

इति तृतीयोऽङ्कः।

## अथ चतुर्थोऽङ्कः

पत्नीकृतपतित्यागनिरासः।

[ततः प्रविशति राजपीठासीनो राजा काशीनरेशः।]

**काशिराजः** – मन्त्रिन्! कथय, न्यायार्थमद्य कस्य प्राप्तमावेदनपत्रम्?

**मन्त्री** – किं कथयामि महाराज! अद्य तु राजपुत्र्याः पतित्यागपत्रमपि प्राप्तम्।

**काशिराजः** – किं पतित्यागपत्रम्? ह्य एवं विवाहोऽभूत्पुनश्चाद्यैव त्यागपत्रम्।

**मन्त्री** – एवमेवाऽस्ति राजन्!

**काशिराजः** – आश्चर्यमभून्मे तच्छ्रुत्वा।

**सभासज्जनः** – राजन्! पतित्यागपत्रे राजकुमार्या किं लिखितमस्ति? तच्छ्रवणादेशेन सर्वे वयमनुगृहीतव्याः सभासदः।

**काशिराजः** – मन्त्रिन्! त्यागपत्रं वाचयित्वा श्रावय।

मन्त्री – (वाचयति) आदरणीयन्यायप्रियराजन्! ह्यो रात्रौ येन मौनपण्डितेन सह मम पाणिग्रहणसंस्कारः कारितः, स नितान्तमूर्ख आसीदिति वार्तया विज्ञातम्। अत्राऽऽचार्यशिवनाथेन मे विवाहं मूर्खजनेन सार्धं कारयित्वा पूर्व मत्पराजितानां पण्डितानामपमानप्रतिशोधो गृहीतः। अतो मे प्रतिज्ञानुसारेण विदुषा सह ममोद्वाहो न जातः। तस्मादहं तं मूर्खं मौनपण्डितं स्वपतिं न मन्ये। अतो मदीयं पति-त्यागपत्र अवश्यमेव स्वीकर्तव्यमिति।

सभासदः – न्यायः क्रियतां महाराज! न्यायः क्रियताम्। राजकुमार्याः पतित्यागपत्रे न्यायपूर्णविचारः स्यादिति निवेदनम्। [न्यायशब्दैर्गुञ्जिता सभा।]

काशिराजः – मन्त्रिन्! आह्वानपत्रं प्रेष्य तमाचार्यशिवनाथं तस्य च शिष्यं तं मौनपण्डितमाह्वय। येन सत्यं गुप्तं न स्यात्।

मन्त्री – आगच्छ सेवकराम! गृहाण राजाज्ञापत्रम्। आचार्यशिवनाथं तस्य च शिष्यं कालिदासमाहूय सहैवाऽऽनय।

सेवकरामः – (निर्गत्य प्रविश्य च) स्वामिन्। कालिदासस्तु नासीत्, गुरु-शिवनाथश्चाऽऽयाति।

काशिराजः – (कञ्चुकिनं प्रति) रामदास! गच्छ, राजकुमारीमपि सहैवाऽऽनय। (गच्छति, राजसुतया सह प्रविशति।)

[ततः प्रविशति स आचार्यशिवनाथः।]

काशिराजः – (साञ्जलिः) गुरुराजं नौमि।

शिवनाथः – (हस्तमुद्यम्याऽऽशीर्वदति) –

चिरंजीव राजन् गृहे च त्वदीये,
सुखं शान्तिरास्तां, यशस्त्वं लभस्व।
धनं वर्धयन्तु प्रजा मोदमाना–
स्तवाऽरिर्विजेयस्त्वमक्रान्तराज्यः ॥1॥

काशिराजः – महाराज! भवान्निरन्तरं मे राज्ये सुखं शान्तिं च समीहते, परं मम पुत्र्या विवाहं मूर्खेण सह कथमकारयत्?

शिवनाथः – राजन्! को वदति कालिदासो मूर्ख इति?

काशिराजः – प्रथममासनमलङ्क्रियताम्, तत उत्तरं प्रदातुं कृपा क्रियताम्।

शिवनाथः – (आसनं गृहीत्वा) कालिदासस्तु पण्डितोऽस्ति राजन्। सम्प्रति तेन मौनमवलम्बितम्, येन तव पुत्र्या स मूर्ख इति विज्ञातम्।

काशिराजः – नहि महाराज! राजकुमारीकक्षे रात्रौ तेन मौनं त्यक्तम्। वार्तया सा तथा विज्ञातवती।

शिवनाथः – नहि, स मौनं कदापि न त्यक्ष्यति। तेन मौनं वर्षाय गृहीतम्। तदवधेः प्राक् स कथं त्यक्तुं शक्तः?

काशिराज – राजकुमारी त्वेतदेव कथयति। तया तस्य त्यागोऽपि कृतः।

शिवनाथः – किं राजकुमार्या तस्य त्यागोऽपि कृतः? तदा तु राजन्! तव पुत्र्या न केवलं पण्डितस्य, अपि तु पत्युरप्यपमानः कृतः।

काशिराजः – अहं सर्वेषां समक्षमेव राजकुमारीं पृच्छामि यत्तया कालिदासो मूर्ख इति कथं ज्ञातम्? पुत्रि! कथय निस्सङ्कोचम्।

विद्योत्तमा – यदानीं पितः! मया तस्य वार्तालापेन मूर्खस्त्वं विज्ञातम्, तदानीं स कक्षाद् बहिर्गन्तुमुक्तः। स्वप्रतिज्ञयाऽहं पतिं विद्वांसमीहे मूर्खं न।

शिवनाथः – राजन्! तस्मिन्दिने शास्त्रार्थे तु सर्वैरेव सभासद्भिर्भवता राजकुमार्या चापि स मोनपण्डितो विद्वद्रूपेण सम्मानितः।

विद्योत्तमा – आचार्य! तस्मिन्दिने भवता स मूर्खो मौनपण्डित इत्युद्घोष्याऽहं वञ्चिता। इत्थं भवता मत्पराजितपण्डितापमानप्रतिशोधः कृतः। एतदाचरणमुचितं न भवतः। अतः काशिराजेन मम पतित्यागपत्रं स्वीकृत्य न्यायः कर्तव्यः।

काशिराजः – मान्याः सभासदः! राजकुमार्या विद्योत्तमया दत्तं पतित्यागपत्रं मन्त्रिणा पठितम्। तदनुसारञ्चाऽऽचार्यशिवनाथस्य विद्योत्तमायाश्च वचनान्यपि श्रुतानि, परमत्र विद्योत्तमायाः पत्युः कालिदासस्याऽनुपस्थितिरभूत्। अतः सम्प्रति तद्वचनश्रवणाभावे राजकुमार्याः पतित्यागपत्रनिरासः क्रियते।

सभासदः – समुचितोऽयं न्यायः।

शिवनाथः – राजन्! पतिपत्न्योरेकस्याऽनुपस्थितावन्यस्य दत्तं त्यागपत्रमस्वीकृत्य भवता न्याये निष्पक्षता स्थापिता। स्वस्ति ते। गच्छामि।

[पटीक्षेपः। निष्क्रान्ताः सर्वे।]

इति चतुर्थोऽङ्कः।

## अथ पञ्चमोऽङ्कः

अस्तिकश्चिद् वागर्थ इति विषये विद्योत्तमायाः प्रश्नाः।

[ततः प्रविशति हर्म्ये काशिराजस्तत्पुत्री विद्योत्तमा च।]

काशिराजः – पुत्रि! किं चिन्तयसि?

विद्योत्तमा – नैव किमपि पितः!

काशिराजः – किं कदाचिन्मौनपण्डितमनुस्मरसि?

विद्योत्तमा – पण्डितापमानशोधाय तदाऽहं वञ्चिताऽऽचार्येण शिवनाथेन। तेन स मूर्खोऽपि मोनपण्डितो घोषितः यदि तेन सह मे मौखिकः शास्त्रार्थोऽभविष्यत्, तन्मे विवाहे प्रतारपोयं नाऽभविष्यत् पितः! मौखिकशास्त्रार्थे मम विजयो निश्चित आसीत्। अधुना वर्षद्वयमपि व्यतीतम्, परं स शास्त्रार्थाय मां प्रत्यागतो न।

काशिराजः – पुत्रि! यदि स मूर्खोऽप्यासीत्, तत्किमासीत्? मूर्खो विद्वानपि भवितुं शक्नोति। शृणु मे बाले!
मन्ये, स मौनी न बुधः पतिस्ते, निष्कासनीयो न गृहात्परं सः।
अध्यापने त्वं शक्ताऽसि तस्य, नहि तदकरोर्यत्पत्नी करोति ॥1॥
सुते! विवाहस्तव येन समभूत्,
मूर्खः स विज्ञो वा ऽऽसीत्पतिस्ते।
शृणु, भारतीया नारी सदैव,
पत्युर्हितं वाच्छति सर्वथैव ॥2॥

विद्योत्तमा – पितः! तस्याऽहं हितमैच्छम्। स मे भर्त्सनया बुधो भवितुं प्रतिज्ञां कृत्वा गतः। मन्ये, शास्त्राण्यधीत्य स मां प्रत्यागन्ता। चिन्तां न कुरु पितः!

काशिराजः – पुत्रि!
अधुनापि तव भर्त्सनया स मौनी,
श्रमेण विद्वान् शक्नोति भवितुम्।
त्यागस्त्वदीयस्तज्जीवनेऽयम्,
विद्याप्रदः सौख्यप्रदः क्षणः स्यात् ॥3॥

विद्योत्तमा – पितस्तदानीं राजसभायां मम पतित्यागपत्रं भवता स्वीकर्तव्यमासीत्परं तादृशं कथं न कृतम्?

काशिराजः – पुत्रि! नैतादृशः कोऽपि जनकोऽस्ति, यः स्वीयां दुहितरं पति-रहितां द्रष्टुमिच्छति। कथय, वत्से! तस्मिन् गते तव न किञ्चिद् दुःखमभूत्?

विद्योत्तमा – नैव पितः! स मूर्ख आसीत्। शृणु–
पित ईदृशाः सन्ति हि मे विचाराः,
प्रतिज्ञया पतिमङ्गीकरिष्ये।
मौनी स विद्वान्नासीत् पितः शृणु,
वाचाऽस्य मौनावरणं निरस्तम् ॥4॥

काशिराजः – वत्से! कुलीना पत्नी स्वपत्युः,
शृणु सर्वथा सहयोगं करोति।
त्वमशिक्षयिष्यो यदि तं तदा ते,
तज्जीवने सहयोगोऽभविष्यत् ॥5॥

विद्योत्तमा – ज्ञानेन मे कीर्तिस्ते भविष्यति,
यशो मया जीवनमेव मन्यते।
पत्या हि मे विदुषा तात! भाव्यम्,
पितस्त्वया चिन्ता नो विधेया ॥6॥

काशिराजः – चिन्ता मदीया तव यौवनं नवम्,
तत्त्वादृशस्ते तरुणः पतिर्भवेत्।

प्रणादृते सिद्ध्यति सर्वमेतत्,
सुते! प्रतिज्ञा विहिता त्वया कथम्? ॥7 ॥

विद्योत्तमा — विद्वान् पतिर्मे स्यादिति प्रतिज्ञा,
पूर्णा भविष्यति तव प्रत्ययो न?
मौनी स विद्वान् विद्या—प्रयत्नैः,
भवितैकदा वै पूर्णा ममाशा ॥8 ॥

काशिराजः — विज्ञं पतिं प्राप्तुं विज्ञपुत्रि!
समयं प्रतीक्षस्व स्वजीवने तम्।
यं प्राप्य त्वं स्वस्मिन् जीवनेऽग्रे,
प्राज्ञं पतिं प्राप्स्यसि तं ममाशीः ॥9 ॥

[पटीक्षेपः। निष्क्रान्ताः सर्वे।]
[ततः प्रविशति सखीपरिवृता राजकुमारी विद्योत्तमा।]

कमला — राजकुमारि! किं किं विचारयसि?
विद्योत्तमा — न किमपि सखि!
विमला — किं पतिविषयं चिन्तयसि?
विद्योत्तमा — नहि, नहि, सखि!
कमला — न जाने, स आगमिष्यति कदा?
विद्योत्तमा — ज्ञायते, मद्विषयचिन्ता त्वामधिकं बाधते।
कमला — सखीचिन्ता सखीमेव बाधते सखि!
कुशलिका — (प्रविश्य) जयतु जयतु राजकुमारी।
विद्योत्तमा — कथय, किं वृत्तम्? बहुप्रसन्नवदनाऽसि।
कुशलिका — राजकुमारि! द्वारे तिष्ठति विद्वानेकः। स स्वं कालिदासं विज्ञापयसि।
विद्योत्तमा — (सहर्षम्) किं किं स स्वं कालिदासं विज्ञापयति? तच्छीघ्रं गच्छ, तं सादरमानय।
कुशलिका — (निर्गत्य प्रविश्य च) राजकुमारि! सोऽयमागतः कालिदासः।
विद्योत्तमा — (सहर्षम्) आगम्यताम्, आगम्यताम्, उपविश्यतामत्रासनम्।
कालिदास — एष उपविशामि। अपि भवती कुशलिनी?
विद्योत्तमा — (सस्मितम्) सर्वमत्र कुशलम्। स्वकुशलं कथयतु भवान्।
कालिदास — अहमत्र सर्वथा कुशली। गुरुकुलादधीतः कतिपयान् शास्त्रार्थचतुरानपि जित्वाऽत्र भवतीं समायातोऽस्मि। निर्दिशतु भवती को नियोग इति?
विद्योत्तमा — अत्र गुरुकुले तु भवान्नासीत्। पुनः कस्माद् गुरुकुलादधीतो भवान्?
कालिदासः — उज्जयिन्यां मया सर्वमधीतं राजकुमारि! भवत्याः वचनैरहं सम्प्रति विद्वान् संवृत्तोऽस्मि, परं न जाने भवन्मतेन बुधोऽहमस्मि न वा। अथ कृपया मम पतित्वमङ्गीकरोतु भवती।

विद्योत्तमा – प्रतिज्ञयाऽहं भवतः पतित्वमङ्गीकरिष्ये विद्वन्! तदनुसारमहं शास्त्रार्थमाश्रयामि। मां पराजित्यैव भवान्। पतित्वेन गृह्णातु।

कालिदासः – (सस्मित्) प्रश्नं करोतु श्रीमती।

विद्योत्तमा – (गम्भीरतया) अस्ति कश्चिद् वागर्थः? अस्योत्तरं कवितामाश्रित्य दीयताम्।

कालिदासः – कवितामाश्रित्य?

विद्योत्तमा – आम्, अहं भवन्तं कविं दिदृक्षे।

कालिदासः – काव्यरहितवाण्या प्रश्नोत्तरं ददामि प्रिये!

विद्योत्तमा – पिपृच्छप्रश्नोत्तरं तदिच्छानुसारमेव प्रदेहि, येन तदात्मा प्रसन्नः सन् त्वां पतिमङ्गीकरोतु। शृणु–

मन्ये, त्वमधीतशास्त्रोऽसि,
मम प्रश्नस्य तूत्तरम्।
यदि काव्यात्मं दत्से,
मंस्ये तत्त्वामहं पतिम् ॥10॥

कालिदासः – तदेतदर्थमपि काव्यसाधनामपेक्षते प्रिये! अतः किञ्चित्कालानन्तरं सेवायां पुनरायास्यामि, गच्छामि काव्यसाधनायै सुभगे!

सुशीला – भवान् वर्षत्रयानन्तरमत्रागतः। अथ पुनर्गन्तुमिच्छसि भद्र!

विद्योत्तमा – प्रिय! निरन्तरमहं तद्धितं कामये, यस्य विवाहोमया सह सम्भूतः। श्रूयताम्–

काव्यं श्रयेरिच्छसि चेत्स्वमानम्,
कविश्च भूत्वा मम पार्श्वमेहि।
विद्योत्तमां मां जय कवितयाऽङ्ग!
कुर्वे त्वदीयाऽऽगमनप्रतीक्षाम् ॥11॥

कालिदासः – प्रिये! तव सद्भावनया निरन्तरमहं प्रगतिपथमग्रे सरामि। त्वादृशी पत्नी तु प्रतिजनं प्राप्नोतु, येन तस्याः पतिरहर्निशं स्वजीवने समुन्नतिं व्रजेत्। अथ मां गन्तुमनुजानीहि।

विद्योत्तमा – गच्छ, प्रिय! गच्छ–

तुभ्यं सुबुद्धिं सुमुखो ददातु,
मार्गस्त्वदीयश्च शिवो हि भूताय।
रक्षन्तु देवास्तव कायमेनम्,
सा शारदा स्यात्तव वक्त्रवाणी ॥12॥

कालिदासः – अस्तु, प्रिये! यामि गुरोः कुलं तत्,

यस्मादिह त्वां परिपोतुमागाम्।
त्वामागमिष्यामि गृहीतकाव्यो
दूरे न कुर्या मनसः स्मृतिं मे ॥13॥

[कालिदासो गच्छति विद्योत्तमा च तं गच्छन्तमेव पश्यति।]

**सुशीला** — राजकुमारि! भवत्या तु विद्वानपि पतिरस्वीकृतः। पुनरेतावान् कठोरा ऽऽग्रहः कथमबलम्बितो भवत्या?

**विद्योत्तमा** — सखि! कविकीर्तिरमरा भवति। अतोऽहं स्वपतिं कविं द्रष्टुमिच्छामि, येनाऽहमपि तस्य पत्नीत्वेन जगत्याममरा भवेयमिति भावना मे।

[पटीक्षेपः। निष्क्रान्ताः सर्वे।]

इति पञ्चमोऽङ्कः।

## अथ षष्ठोऽङ्कः

### कालिदासस्य कवित्वसाधना।

[ततः प्रविश्याति सशिष्य आचार्यशिवनाथः।]

**शिवनाथः** — कथय, भैरव! राजकुमार्या अधुना किं वृत्तमस्ति?

**भैरवनाथः** — स्वस्मिन् कक्षे पल्यङ्के पतिता सा स्वभाग्यानि रोदितितमाम्। गुरुदेव! सा सम्प्रति पण्डितापमानफलं भुङ्क्ते।

**गुरुकुल-सेवकः** — (प्रविश्य) गुरुदेव! आगतः स कालिदासः।

**शिवनाथः** — (सहर्षम्) क्व सः?

**सेवकश्चन्द्रदेवः** — वृत्तपिपृच्छुभिर्विद्यार्थिभिः परिवृतः स बहिरास्ते गुरुदेव!

**शिवनाथः** — शीघ्रमाहूयतां सः। गच्छ, तमानय।

**चन्द्रदेवः** — (निर्गत्य प्रविश्य च) आगतोऽयं गुरुदेव!

**शिवनाथः** — किं सा त्वां पतिं मन्यते कालिदास!

**कालिदासः** — सा मामधीतमपि पतिमङ्गीकरोति नो गुरुवर! साम्प्रतमहं तस्याः प्रश्नोत्तरप्रदाने सक्षमोऽभूवं, तर्हि सा मम कवित्वं दिदृक्षते।

**शिवनाथः** — ज्ञायते, सा त्वां पतिरूपेण वाच्छति नैव। कथय, भद्र! तव निस्सारणसमये तया किमन्यदुक्तम्? सुस्पष्टं कथय।

**कालिदासः** — साऽवादीद् यदहमाचार्येण प्रतारिताऽस्मि त्वादृशं मूर्खजनं मौनपण्डितमुद्घोष्य। गच्छ त्वमितः। मूर्खं त्वामहं स्वप्रतिज्ञया पतिं न मन्ये।

**शिवनाथः** — पुनस्त्वं क्व गत आसीः?

**कालिदासः** — एकेन महात्मना साकमहमुज्जयिनीं गतवानासम्। तत्रैव गुरुकुले मया ऽऽचार्यबृहस्पतेरन्तेवासित्वे शास्त्राणामध्ययनं कृतम्। परमधुना भवतां सन्निधौ काव्यशिक्षां ग्रहीतुमिच्छामि, येन कविर्भूत्वा स्वपत्नीं प्राप्नुं शक्नुयाम्। कृपया कवित्वं शिक्षय गुरुदेव!

शिवनाथः — साधु वत्स! साधु। अहं त्वां कवित्वं शिक्षयामि। शृणु—
त्वं तत्काव्यं कुरु हि सततं कविर्भव येन च,
जित्वा वाचा नृपदुहितरं गृहं नय शिष्य! ताम्।
पाणेः रेखा प्रकटयति ते कविर्भवितासि यत्,
तच्छब्दानां रचननियमान् विधिं पठछन्दसाम् ॥1॥

कालिदासः — छन्दोयुक्तं कतिपयदिवसैः पठ्यते काव्यशास्त्रम्,
तत्सर्वं मां गुरुवर! सततं शिक्षयेस्तद्विधानैः।
येनाऽहंस्यां सुकविरिह बुधां प्राप्नुयां स्वां च पत्नीम्,
तत्प्रश्नानां स्वकृतरचनया पूज्य! दत्त्वोत्तराणि ॥2॥

शिवनाथः — त्वदीया सा पत्नी प्रिय! जितबुधानामकरोदवज्ञाम्,
तया भूयस्तस्य प्रकृतोऽपमानः पतिरस्ति योऽद्य।
परं त्यक्तोऽसि त्वं तदपि नृपपुत्रीं कथमीहसे ताम्?
शठे शाठ्यं कुर्यादिति नयबलेन त्वमपि त्यजेस्ताम् ॥3॥

कालिदासः — गुरुदेव सा विदुषी, यया पतिमानसं न विलोकितम्,
पतिरस्मि, सा रमणी हि मे, कथितस्तयाऽस्तु बुधः पतिः,
भविता गुरो! स पतिर्महान् यमसौ पतिं कविमीहते,
तदभीष्टमत्र पतिं कविं गुरुवर्य! कर्तुमहं यते ॥4॥

शिवनाथः — वत्स! तव वाण्यां तु काव्यशक्तिराविर्भवति, यत्त्वं मया सार्धं कवितया वार्तामाचरसि। तद्गच्छ, साम्प्रतमेकान्ते स्थित्वा कविताभ्यासं कुरु, येन तवाऽभिलाषेण सह राजकुमारी कामनाया अपि पूर्तिर्भवेत्।

कालिदासः — यदाज्ञापयति गुरुदेवः। [गच्छति।]

[पटीक्षेपः। निष्क्रान्ताः सर्वे।]

[ततः प्रविशति चिन्तितो राजा, राज्ञी विद्योत्तमा च।]

काशिराज — पुत्रि! श्रूयते यदधुना स कालिदासो गुरुकुलादधीतो विद्वान् संवृत्तः।

विद्योत्तमा — श्रूयते पितः! तादृश सः।

राज्ञी — बाले! स शास्त्रार्थेण बहून् विद्वांसोऽपि जितवान्। अधुना तव प्रतिज्ञया स ते पतिर्विद्वानतिवर्तते, सादरमाहूयताम्।

विद्योत्तमा — मम प्रतिज्ञया स मां न विजितवान् मातः।

काशिराज — किं द्वितीयवारमपि स तव प्रश्नमुत्तरितुं समर्थो नाऽभूत्?

विद्योत्तमा — नैव पितः!

राज्ञी — नहि पुत्रि! स उत्तरप्रदाने समर्थ आसीत्, परं त्वया प्रश्नोत्तरं काव्यात्मकमभिलषितम्।

विद्योत्तमा — भवत्या कथमित्त्थं ज्ञातं मातः।

राज्ञी — तव संख्याः सुशीलायाः सकाशात्। अधुना कवितापणस्तत्र नियोजित,

कथं वत्से। किं त्वमधुनापि तं मनसा नाऽभिलषसि?

विद्योत्तमा – नैवं मातः! अहं तं कविं चिकीर्षामि। श्रूयते त्रिभिर्वर्षैरितस्ततो भारतभ्रमणेन बहुज्ञानं लब्ध्वा सोऽधुना कवितामपि करोति।

राज्ञी – पुत्रि! मम कथनात्सादरं तमाहूय गृहे निवासय, येन तव जीवनं सुखमयं भवेत्।

विद्योत्तमा – नैव चिन्तय मातः। स समयः शीघ्रमागन्ता।

काशिराजः – मम बाले!

यदि तं चिकीर्षसि कविमत्र गेहे,
शक्नोषि कर्तुं तं वासयित्वा।
अधुना तमङ्गीकुर्याः पतिं, मे
चिन्तां स्वजीवनदुःखं च दूरय ॥5 ॥

विद्योत्तमा – प्रश्नोत्तरे मे काव्यं स कृत्वा,
स्वयमेकदाऽऽगन्ता मामवश्यम्।
तदा विचारः कर्तव्य एवं,
पितस्त्वया चिन्ता नो विधेया ॥6 ॥

काशिराजः – पत्न्या हृदये काचिदुपेक्षा
कर्तव्या न पतिं प्रति वत्से!

विद्योत्तमा – तात! नास्ति सा तस्योन्नत्यै
मया कृतोऽयं साधुर्यत्नः ॥7 ॥

[पटाक्षेपः। निष्क्रान्ताः सर्वे।]

[ततः प्रविशन्ति कालिदासेन सह काशीगुरुकुलविद्यार्थिनः।]

तपनदासः – कथय, कविकालिदास! किं करोषि कविताम्?

कालिदासः – मित्र! मां कविमुक्त्वा कथमुपहससि?

सोमदासः – किं त्वं कविर्नासि? त्वया तु ह्यः कानिचिंदृतुविषयकपद्यानि श्रावितानि, तेषां सङ्कलनं कृतं न वा?

कालिदासः – कृतं भद्र! ऋतसंहार इति नाम सङ्कलनस्य कृतं मित्र!

सोमदासः – साधु मित्र! कविरसि ते काव्यम्,
चित्तहरं मन्ये मनोहरम्।
राजसुता साऽधुना त्वां पतिम्,
अङ्गीकरिष्यतीति निश्चितम् ॥8 ॥

तपनदासः – कथय, मित्र! किं पुनर्निभर्त्सितोऽसि तया राजकुमार्या? तामधुनापि तां पत्नीं मन्यसे। साऽधुना कमिच्छति? किमधुनाऽपि सा त्वां न कामयते?

कालिदासः – नहि मित्र! सा स्वपतिं कविमभिलषति।

तपनदासः – (विहस्य) अरे मित्र! पूर्वं तु सा त्वां विद्वांसमिच्छति स्म, परमधुना कविं कामयते। नैव, नैव। सा राजकुमारी वर्तते, कमपि राजकुमारं कामयते। यदि त्वादृशे मुण्डिताशिरसि जने तदभिलाषोऽभविष्यत्तत्स्यां निशि सा त्वां स्व कक्षात्कथं निरसारयिष्यत्?

कालिदासः – तदा हि कामशास्त्रज्ञो नाऽऽसं मित्र! युवाऽप्यहम्।
योऽभूवमात्मसात्कर्तुं कामोन्मत्तां न तां प्रभुः ॥9॥

विपिनदासः – अस्मादेव मित्र! किं गुनगुनायसेतमाम्? किं कवयसि? पत्नीं प्राप्तुं किं तुकबन्धनं करोषि?

कालिदासः – साम्प्रतमहं मित्र! मेघदूतं नाम काव्यं विरचामि, यस्मिन्नेको विरही पतिः स्वपत्नीसमीपे मेघेन स्वविरहसन्देशं प्रेषयति।

विपिनदासः – किं कथयसि? मित्र! श्रूयताम्–
तव जीवने न तस्या भोगः,
येन द्वयोरधुनाऽपि वियोगः।
सा प्राच्यां समुदेति रवे र्भा,
त्वं पश्चिमस्य निष्प्रभसूर्यः ॥10॥

तपनदासः – सा क्व तु राजकुमारी रमणी?
सरसमिवोपवनं विभाति या।
नीरसवनमिव विभासि च त्वम्,
द्वयोरतो मेलः कथं भवेत्? ॥11॥

सोमदासः – मैवं वादीर्मित्र! कविरयम्,
चारुतरं काव्यं करोति यः।
अस्मिन्नपि स रसः सञ्चरित,
येन सापि सरसा भविष्यति ॥12॥

तपनदासः – मित्र! तादृशमस्य भाग्यं क्व? यादृशं चिन्तयसि।

सोमदासः – मित्र! सम्प्रति स्थितिः परिवर्तिता वर्तते। शृणु–
अधुनाऽस्मिन् शारदा प्रसन्ना,
या कवित्वमस्मै प्रददाति।
येन कतिपयैरहोभिरेष्यति,
विद्योत्तमा पार्श्वमेतस्य ॥13॥

तपनदासः – किम्वुक्तं मे मित्र! त्वयैतत्,
कथं कालिदासं त्वं हससि?
सा किमेनमायास्यति? वद माम्,
नारी नरमुपगच्छति पूर्वम् ॥14॥

विपिनदासः – शृणुत मित्राणि! यदाऽयं कालिदास उज्जयिनीगुरुकुलादधीतशास्त्रोऽपि राजकुमारीसन्निधिमुपगतवान्, तदापि साऽस्य पतिरूपेण सम्मानं नाकरोत्। अधुनाऽयं तृतीयवारं तत्र गत्वा स्वकाव्यानि गायं गायं तामनुनेष्यति।

कालिदासः – शृणु, नाहं तामनुनेष्यामि, पूरयितुं तत्प्रणं यतिष्ये।

पवनदासः – पूर्णे प्रणे मित्र! सा सेवां करिष्यते तव समयोऽयं ते ॥15 ॥

सोमदासः – किं भवद्भिर्नज्ञातं यदयं राजकुमारी प्रश्नविषये काव्यत्रयं रचयितुं यतते।

शृणुत, यदाऽस्य काव्यधारेयम्,
प्रवाहमेष्यति, तदा द्रक्ष्यथ।
यत्र महाकवयो मङ्क्ष्यन्ति,
क्व सा वराकी राजकुमारी? ॥16 ॥

कालिदासः – मित्र! भवतो विचारानाद्रिये।

सोमदासः – मित्रकालिदास!

काव्यं त्वं कुरुषे हि यादृशम्,
आशा से, त्वं महाकविः स्याः।
तत्कवितां प्रतिदिनमभ्यस्येः,
येन शक्नुयाः कर्तुं काव्यम् ॥17 ॥

[पटीक्षेपः। निष्क्रान्ताः सर्वे।]

इति षष्ठोऽङ्कः।

## अथ सप्तमोऽङ्कः

अस्ति कश्चिद् वागर्थ इति प्रश्नोत्तरे कालिदासस्य काव्यत्रयम्।

[ततः प्रविशति सखीसहिता राजकुमारी विद्योत्तमा।]

सुशीला – राजकुमारि! अधुना तु भवतीं प्रतिः कविरपि संवृत्तः। तस्य काव्यानि जनता समनोयोगं शृणोति। किं त्वं तं न स्मरसि?

विद्योत्तमा – कथं न स्मरामि? मम प्रश्नोत्तरप्रदाने स समर्थो नाभूत्। मया स कवितां कर्तुं प्रेरितः, परं मम प्रश्नं गृहीत्वा गतस्य तस्य त्रीणि वर्षाणि व्यतीतानि, किन्तु पुनर्मां स नागतः सखि!

सुशीला – श्रूयते, स इत उज्जयिनीं गतः। तत्रोज्जयिन्यां राज्ञा विक्रमादित्येन तस्य कवित्वमवलोक्य राजकविपदे नियुक्तः स राजकीयसुखसुविधामधिगम्य किं त्वामपि विस्मृतवान्?

विद्योत्तमा – मत्तस्तु सखि! स न किमपि सुखं प्राप्तवान्। पुनः स मां तत्र कथं स्मरिष्यति?

सुशीला – अतस्त्वामहं सखि! कथयामि,
त्वं ह्यधुना तं सादरमाह्वय।
पतिमङ्गीकुरु तं महाकविम्,
येनेदं तव जीवनं भवेत् ॥1 ॥

शृणु सखि! – पत्या सह जीवने तु नारी,
यमानन्दमनुभवति लौकिकम्।
तमिन्द्रियैर्जनितं मनीषिणः
परमानन्दमेव निगदन्ति ॥2 ॥

इदं तदेव जीवनं, यस्मिन्; भवति द्वयोरात्मनोरेकता।
परमात्मनिं विलयोऽयमात्मनः, पत्नी स्वतां मेलयति पत्यौ ॥3 ॥
आत्मा परमात्मनं न यावद् गच्छति तावल्लोकं भ्रमति।
तथैव नारी नरं न लब्ध्वा यौवनविषमवंनानि गच्छति ॥4 ॥

विद्योत्तमा – परमस्मिन् जीवने स्वकीये
पीडामनुभवामि काञ्चिन्नो।
कापि विषमता न मे न कष्टम्,
यदनुभूयते त्वया ममाऽऽलि ॥5 ॥

सुशीला – तद्योगेन स गन्धस्त्वयि सखि!
समुत्पत्स्यते शृणु मे वचनम्।
यः कस्मिन्नपि भवत्युपवने,
पुष्पविकासात्प्रसरति परितः ॥6 ॥

विद्योत्तमा – एतत्सर्वमनुभवति नारी पतिमनुकूलं प्राप्य सर्वदा।
सुशीला – तव विचारमाद्रिये सुशीले! वचनोऽनुरूपं ह्यगन्ता सः।
यदि स परीक्षासफलः स्यात्तत्पतिरूपेण तमङ्गीकुर्याम् ॥8 ॥
सुशीला – राजपुत्रि! यस्या नार्या जीवने पतिसुखं नास्ति, तत्तस्यास्तानि सर्वसुखसाधनानि निरर्थकानि भवन्ति। अतस्त्वं पतिमाहूय जीवनानन्दं लभस्व।
कुशलिका – (प्रविश्य) जयतु जयतु राजपुत्री।
विद्योत्तमा – कुशलिके! कथय, किं वृत्तम्?
कुशलिका – भवतीं सम्मिलितुमीहते कविकालिदासो राजकुमारि!
विद्योत्तमा – क्व सः?
कुशलिका – स द्वारि तिष्ठति।
विद्योत्तमा – (सहर्षम्) सादरं प्रवेशय तम्।
सुशीला – सखि! साम्प्रतमहं गच्छामि, त्वं तावत्स्वपतिं सम्मानय। एकान्ते प्रेमालापमाचर। आशासे, त्वमधुना मधुरालापेन तमात्मीयं कर्तुमवश्यमेव

सफलतां प्राप्स्यसि। जगन्नियन्ता परमेशस्त्वामग्रेसारयतु स्वपतिं वशीकर्तुम्। (गच्छति)।

कुशलिका — (निर्गत्य प्रविश्य च) एष समायातः कवि कालिदासो राजसुते!

विद्योत्तमा — (सहर्षमुत्थाय) आगम्यताम्, आगम्यतां कविवर! (सेविकां प्रति) गच्छ कुशलिके! कविवरसम्मानाय समुचितमाशु प्रबन्धं कुरु। (कालिदासं प्रति) कविवर! उपविश्यताम्, समलङ्क्रियतामयं पर्यङ्कः।

कालिदासः — नाऽहं योग्यस्ते पर्यङ्कारोहणस्य। अत्राऽऽसन्द्यामुपविशामि। श्रूयतां स्वप्रश्नोत्तरं राजपुत्रि!

विद्योत्तमा — श्रावयतु भवान्।

कालिदासः — भवदीयप्रश्नोत्तरविषयकं काव्यत्रयं प्रणीतं मया, यद् भवत्प्रश्नवाक्यपदाग्रमस्ति राजपुत्रि! क्रमशः श्रोतव्यम्। तत्रैतत्प्रथममस्ति कुमारसम्भवं नाम महाकाव्यम्, यत्र मया त्वं पार्वतीस्वरूपा तापसी चित्रिता, या स्वकष्टकैस्तपोभिरिष्टं शिवमवाप्तुं समर्थाऽभूत्। अस्य काव्यस्याऽयमादिमः श्लोकः—

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः।
पूर्वाऽपरौ तोयनिधीवगाह्य स्थितः पृथिव्या इव मानदण्डः॥

गृह्यतां काव्यमेतत्।

विद्योत्तमाः — सुन्दरं सुन्दरं काव्यमिदं कविवर! [प्रसन्ना भवति।]

कालिदासः — द्वितीयं मेघदूतकाव्यं मे, यस्मिंस्त्वं यक्षिणी चित्रिता।
कश्चिद् यक्षो यस्या विरहे, व्याकुलोऽस्त्यहमस्मि यथा ते ॥9॥
यस्येदमादिमं पद्यम्—
कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः,
शापेनाऽस्तंगमितमहिमा वर्षभोग्येन भर्तुः।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु,
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥
गृह्यतामेतदपि।

विद्योत्तमा — एतत्काव्यं तु भवदीयमतीवमनोहरं चित्ताकर्षकं च। तृतीयं काव्यं कीदृशमस्ति? तदपि श्राव्यताम्।

कालिदासः — तृतीयं मे रघुवंशं काव्यं दाम्पत्यं प्रकटितं तत्र तत्।
वागर्थौ मिलतः परस्परं यथा तथा पतिपत्नीमेलः ॥10॥
यस्याऽऽरम्भोऽस्मादादिमात्पद्याद् भवति—
वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥

विद्योत्तमा — कविवर्य! काव्येऽस्मिन् भवता पतिपत्नीमेलोपमा वागर्थमेलेन सह कृता, याऽतीव प्रशंसनीया वर्तते।

कालिदासः — श्रूयतां राजपुत्रि!

सांसारिकं कर्म सम्भवति तयोर्द्वयोर्योगेन विना नो।
वाण्यामर्थो यथा विभाति पत्न्यां पतियोगस्तथेष्यते ॥11॥
पत्नीयोगोऽपि तादृशः स्याद् येन विना पत्युर्विह्वलता।
यथा ह्यजे रामे वा दृष्टा तथा ममापि स्थितिस्त्वां विना ॥12॥
काव्यत्रयी गृह्यतां यस्यां प्रश्नस्योत्तरमस्ति भवत्याः।
इहाऽस्ति कश्चिद् वागर्थो य इष्टस्त्वया तं हि कथयस्व ॥13॥

विद्योत्तमा — प्रियतम!

प्राप्तो मयाऽत्र तव वागर्थः
कविरसि विद्वानसि छन्दोज्ञः।
त्वामहमैच्छं यादृशं कविम्,
तादृशोऽसि, पतिमधुना मन्ये ॥14॥
अग्रे सर, मम करं गृहाण, पाणिग्रहणमद्य मे भविता।
तदेहि पर्यङ्कं प्रिय! पूरय, मम कामं मम तृषं च शमय ॥15॥

कालिदासः — (सस्मितम्)

नहि, नहि, विज्ञे! तदनर्थं कर्तुं मां नो प्रेरय। त्वया मां प्रति तत्कार्यं सम्पादितं यद् गुरुरेकः शिष्यं प्रति करोति। अतो मम हृदये भवतीं प्रति गुरुश्रद्धा वर्तते। तस्मादहं भवतीं पत्नीत्वेन नाऽङ्गीकुर्वे, परं श्रद्धया त्वां गुरुं मन्ये। तदनुसारमेव स्वकाव्यकुसुमानि भवत्यै सादरं सश्रद्धं च मया समर्पितानि।

विद्योत्तमा — (सचिन्तम्)

मैवं वादीः प्रियतम्! मया त्वेकं तत्कार्यं पतिं प्रतिकृतम्, यदेका पत्नी करोति। सा पत्नी साध्वी भवति या सदैव पतिहितं विदधाति। मम तस्य सदाचरणस्य किमयं परिणामः? यद्भवान् मां पत्नीमपि न स्वीकरोति?

कालिदासः — शृणु मम हृदये सा गुरुश्रद्धा
या नमयति मां भवदग्रे हि।
भर्त्सनया तेऽहं कविः कृतः,
तत्त्वां पत्नीं नाङ्गीकुर्वे ॥16॥

विद्योत्तमा — प्रियतम् निरन्तरमद्यतनदिवसात्पूर्वमहं भवता पत्नी मताऽस्मि, येन भवता स्वकाव्येषु पत्नीं प्रति या सादरं प्रेमभावना व्यक्ता, तस्याः किमधिकारिणी नाऽहम्? पुनः कथमयं भवतो हृदये विचारविपर्ययः?

कालिदासः — परिवर्तनं जीवने प्रभवति,
कोऽपि जनो नोन्यति यद् विना।
विस्मर न शुभे! पुरा त्वयापि,
परिवर्तिता विचारसंस्थितिः ॥17॥

विद्योत्तमा – मैवं वादीः प्रियतमोऽसि त्वम्,
मम भर्त्सनया कविरसि विद्वन्!
निजवाण्या मम हृदये मनसि च,
काये च जय लब्धवानहो! ॥18॥
प्रिय! तव पत्नी प्रेमपिपासुः
या पतिप्रेमाऽभिलषति नित्यम्।
प्रसादयसि मे प्रत्यङ्गं त्वम्,
यत्राऽनङ्गसमं त्वां प्रेक्षे ॥18॥

कालिदासः – सुभगे! यदि त्वं पतिप्रेतपिपासुरभविष्यस्तत्त्वं तदा पतिप्रेमाऽकरिष्यः, यदा तव पतिः प्रेमजलपिपासुरासीत्। शृणु–
न पर्यवर्तिष्यन्तं विचारा–
स्तव चेत्तदा मेलशर्वर्याम्।
तत् स्थितिरद्यतना मे विज्ञे!
परिवर्तिताऽभविष्यन्नैव ॥20॥
अतो मदीये हृदये भद्रे!
यत्स्थानं निर्मितं भवत्या।
तत्पदमुच्चं पूज्यगुरोरिह,
कृपया स्वीकुरु विद्ये देवि! ॥21॥

विद्योत्तमा – पूज्य पतिदेव! नाहं गुरुपदमभिलषामि। तवचरणसेवामहमधुना चिकीर्षामि। मामथ स्वचरणसेविकामङ्गीकुरु। शृणु–
रतिर्मया दर्शिता तदानीम्,
परं त्वमासीरज्ञस्तस्याः।
विस्मर तां घटनां प्राणेश्वर!
प्रेममार्गमनुसर मे प्रियवर! ॥22॥

कालिदासः – प्रेममार्गमनुसरामि विज्ञे!
केवलमन्तरमत्रैतावत्।
आसीः पुरा प्रिया गुरुरद्यं,
तत्प्रणयं त्वयि कथन्तु कुर्याम् ॥23॥

विद्योत्तमा – प्राणनाथ! यदि पत्नी स्वपतिं शिक्षयति, तत्किं तस्याः पतिस्तां गुरुं मत्वा दाम्पत्यं जहाति? तयोः शिक्षकस्तु कोऽपि जनः सम्भवति, परं तौ द्वावपि प्रेममार्गमनुसरत एव। शृणु–
अतो भवान् हृदयेन मां गुरुम्,
मनसा पत्नीमङ्गीकुरुताम्।
येनाऽऽवयोर्जीवनं गच्छेत्,
पतिपत्नीप्रणयानन्दं प्रिय! ॥24॥

कालिदासः – यद्यकरिष्यस्त्वं मयि प्रणयं तन्मां गृहान्न बहिरकरिष्यः।

विद्योत्तमा – विस्मर तदतीतं प्राणेश्वर! सम्प्रति मां पत्नीमङ्गीकुरु ॥25 ॥

एहि प्रियतम! मम पर्यङ्कम्,
मनसश्च मे पिपासां शमय।
प्रेमवचनमवलम्ब्य शीघ्रम्,
चुम्बकपोलौ मामालिङ्ग ॥26 ॥

[पाणिं गृहीत्वा कालिदासं पर्यङ्कं प्रति कर्षति।]

कालिदासः – किं कुरुषे, किं कुरुषे सुभगे! नाहं ते पतिः, नाहं ते पतिः।

[इति वदन् स बलात्कारमाकृष्य ततः पलायते।]

विद्योत्तमा – प्रिय! क्व यासि? प्रिय! क्व यासि? अधुनापि किमनधीतकामशास्त्रोऽसि? मत्तो दूरं मा गाः, मत्तो दूरं मा गाः।

[इति चीत्कुर्वती कक्षान्निर्गता, परं कालिदासं पलायितं दृष्ट्वा पुनः कक्षं प्रविश्य बहु रोदितवती।]

सोमदासः – (रोदनं श्रुत्वा प्रविश्य च) किमभूद् राजकुमारि! किं गतः पतिदेवः?

विद्योत्तमा – (सरोदम्) आं कुशलिके! किं कुर्याम्? प्रतिज्ञया मे सर्वं नष्टं
हा सखि!
कुर्यामहं केन विधिना तं स्वाधीनं प्रेम्णा विना पतिम्?
अद्य मे स्थितिः परमविचित्रा सधवाऽहं विधवेव विभामि। ॥27 ॥

कुशलिका – राजकुमारि!
पतिसङ्गमो न यया गृहीतस्तन्नारीजीवनेन कोऽर्थः?
अनुनयं तं शृणु राजदारिके! पत्न्या पतिः प्रपूज्यो भवति ॥28 ॥

विद्योत्तमा – कुशलिके! इयं समयस्य बलवत्ता या सर्वमिह शुभमशुभं वा कारयति। गच्छ, पितरं सर्वमुक्त्वा सहाऽऽनय शीघ्रम्।

कुशलिका – (निर्गत्य प्रविश्य च) राजकुमारि! समागतो महाराजो मात्रा सह।

विद्योत्तमा – मातरं पितरं च वन्दे।

काशिराजः – पुत्रि! किमागतस्ते पतिः कालिदासः?

विद्योत्तमा – आं पितः! स मम प्रश्नोत्तरं दत्वा गतवान्।

काशिराजः – किमस्ति प्रश्नोत्तरम्?

विद्योत्तमा – पितः! अस्ति कश्चिद् वागर्थ इति मम प्रश्नमुद्दिश्य तेनैतानि त्रीणि काव्यानि प्रणीतानि कुमारसम्भवं मेघदूतं रघुवंशं च।

[काव्यानि दर्शयति।]

काशिराजः — (साश्चर्यम्) इमानि त्रीणि काव्यानि कुमारसम्भवं मेघदूतं रघुवंशं च किन्तेन लिखितानि वत्से!

विद्योत्तमा — आं पितः! सम्प्रति स कविरस्ति। यथाऽहं तमैच्छं, तथा स संवृत्तः।

राज्ञी — किमधुनापि बाले! त्वया स सहवासाय न कथितः?

विद्योत्तमा — कथितो मया स मातः! परं स तथा न मन्यते।

काशिराजः — अथ स कथं न मन्यते? कथय पुत्रि!

विद्योत्तमा — पितः! स कथयति यत्त्वं पत्नी नासि परं गुरुरसि। (सरोदम्) मम प्रतिज्ञा सर्वं विनाशितवती। पूर्वं स मूर्ख आसीत्परं पश्चाद् यदा तं विद्वांसं कर्तुमैच्छम्, तथाभूतेन तेनाहं परित्यक्ता। अथाऽहं गुरुकुलं यामि। पितः! सेनाप्रबन्धः क्रियताम्।

काशिराजः — यो मनसा न मन्यते पुत्रि!
स किं बलेन मंस्यते बाले?
अनुनयेन विनयेन पतिस्तु
जेतुं शक्यो नैव बलेन ॥28 ॥

राज्ञी — अतः सेनया किं भविष्यति?
गच्छेरेकाकिनी त्वमेव।
एकान्ते स्वं पतिं प्रसादय,
ह्यनुनयेन मधुरालापेन ॥30 ॥

विद्योत्तमा — यथा भवतोः सहमतिः। तदनुसारमाचरिष्यामि। अधुनाहं गुरुकुलं गच्छामि। ...प्रदेयाऽऽशीः।

काशिराजः — गच्छ पुत्रि! स्यन्दनमारुह्य
बुद्ध्या सदाचरे स्तद्येन।
स त्वां पत्नीमङ्गीकुर्याद्
इत्याशीर्वादः प्रदीयते ॥31 ॥

[पटीक्षेपः। निष्क्रान्ताः सर्वे।]

इति सप्तमोऽङ्कः।

## अथाऽष्टमोऽङ्कः

पतिकृतपत्नीत्यागनिरासः।

[काशीगुरुकुलम्, आचार्यशिवनाथः पीठासीनो वर्तते।]

विद्योत्तमा — (प्रविश्य) काशीनरेशपुत्री विद्योत्तमाऽहमाचार्यवर्यं वन्दे।

शिवनाथः — स्वस्त्यस्तु ते राजसुते सुविज्ञे!
भूया स्वसौभाग्यवती चिराय।

कविकालिदासात्पुत्रं लभस्व,
कथय किमर्थं त्वमिहाऽऽगताऽसि? ॥1 ॥

विद्योत्तमा – आचार्यवर!
यस्माज्जनयितुं तनयं भवन्तः,
शुभाऽऽशिषं मह्यं दत्तवन्तः।
तमत्र मार्गयितुं ह्यागताऽहम्,
गुरो! तमाकारय, सोऽस्ति कुत्र? ॥2 ॥

शिवनाथः – नात्र स राजकुमारि! स तु भवत्सकाशं गतवानासीत्।

विद्योत्तमा – किं स नात्रागतो मत्सकाशान्निवृत्य?

शिवनाथः – नागतः स वत्से!
विद्योत्तमे! विद्यावस्तुतस्त्वम्,
कृतः स्वभर्त्सनयैव स बुधो यया।
ततः कवीभवितुं प्रेरितस्त्वया
तत्काव्यलक्ष्यं त्वं राजपुत्रि! ॥3 ॥

विद्योत्तमा – नैवं कथय, बुधवर! तस्य हेतोः
कृता महान्तो भवता प्रयत्नाः।
स राजजामाता सन्निधिं ते
सम्प्राप्य मौर्ख्यात्प्रबुधत्वमाप ॥4 ॥

शिवनाथः – नाहं पुत्रि! तन्निमित्तं तु त्वमेवाऽसि। अथवा सर्वं समयेन सिद्ध्यति।

विद्योत्तमा – परं मम सिद्धिस्तु नाऽभूदाचार्य! तत्रापि भवदाशिषमपेक्षे।

शिवनाथः – तव प्रयत्नस्तमवश्यमेव प्रापयिष्यति। तं किं पतिं मन्यसे?

विद्योत्तमा – अधुनाऽहं प्रतिज्ञया तं पतिं मन्ये, परं स मयि दुर्मनायते।

शिवनाथः – हृदयेन कामयते त्वां कविः सः,
कविप्रेरणा त्वं तत्कल्पना च।
त्वमेव तच्चित्ते काव्य-मूर्तिः,
अधिकारिणी त्वं तस्यैव जाया ॥5 ॥

विद्योत्तमा – कथ्यतां बुधवर! क्वाऽहं तमन्वेषयेयम्? अथ तमनुनीय प्रसादयिष्यामि।

शिवनाथः – स साम्प्रतमुज्जयिनीं गतो भविष्यति। तत्र स राजा विक्रमादित्येन राजकविपदे नियुक्तो ऽस्ति। तत्रैव गच्छेः राजसाहाय्येन च तमवश्यमेव प्राप्स्यतीति ममाऽऽशीर्वादः। तत्र गच्छ, साफल्यं प्राप्नुहि।

विद्योत्तमा – गच्छामि विद्वद्वर! (गच्छति।)

[पटीक्षेपः। निष्क्रान्ताः सर्वे।]

[ततः प्रविशति काशीनरेशः।]

विद्योत्तमा – (प्रविश्य) प्रणमामि पितः!

काशीनरेश – पतिं प्राप्नुहि पुत्रि! कथय, स प्राप्तो न वा?

विद्योत्तमा – न प्राप्त स पितः! साम्प्रतमुज्जयिन्यां प्राप्स्यते सः। तत्र स राजकवि-पदे नियुक्तः। अथाऽहं तत्रैव गच्छामि।

काशिराजः – गच्छ पुत्रि! गच्छ। तव सर्वकार्यं सेत्स्यति।

विद्योत्तमा – गच्छामि पितः! भवदाशीर्मया सह वर्तताम्।

काशिराजः – पुत्रि! त्वया सह गच्छति ममाशीः,
यया स्वपतिमधिगन्तासि तत्र।
नियोज्य स्वात्मानं कालिदासे,
निरन्तरामरकीर्तिः प्रभूयाः ॥6॥

[विद्योत्तमा गच्छति। पटीक्षेपः। निष्क्रान्ताः सर्वे।]

[उज्जयिन्यां क्षिप्रातटे महाकालेश्वरमन्दिरम्।]

विद्योत्तमा – (प्रविश्य शिवं स्तौति।)

जय जय शिव शङ्कर महादेव! जगतः कर्ता धर्ता त्वमेव।
हे विश्वनाथ! त्वं हर्ताऽसि, हितकर्ता भक्तानां त्वमेव ॥7॥
त्वं पर्वतपुत्रीभर्ताऽसि,
हर्ताऽसि च विपदोऽवश्यमेव।
हे सोमनाथ! रिपुहन्ता त्वम्,
जय जय शिव शङ्कर महादेव! ॥8॥
त्वं सतीपतिः पार्वतीपतिः, हे हर जगतीकालस्त्वमेव।
शूराः समरे त्वामुच्चरन्ति, जय जय हर हर हर महादेव! ॥9॥
हे महाकाल! हे कालेश्वर!
जगतो भर्ता हर्ता त्वमेव।
भक्तास्त्वां स्मरन्ति पुनः पुनः,
हर हर शिवशङ्करमहादेव! ॥10॥
भक्ताऽहं ते प्रार्थनं च मे, उज्जयिनीश्वर शृणु विश्वदेव!
सफलं कुरु मे शरणागमनम्, जय शिव जय हर जय महादेव ॥11॥

[घण्टानादो भवति। पटीक्षेपः। निक्रान्ताः सर्वे।]

[ततः प्रविशन्त्युज्जयिनीनरेशो राजसिंहासनस्थो विक्रमादित्यो यथास्थानमासीनाः सभासदश्च।]

विक्रमादित्यः – (न्यायमन्त्रिणं प्रति) मन्त्रिन्! कथय, कस्यचिदद्य न्यायार्थमावेदनपत्रं प्राप्तं न वा?

न्यायमन्त्री – प्राप्तमेकावेदनपत्रं महाराज!

विक्रमादित्यः – तत्कस्य?

न्यायमन्त्री – (डिण्डिमघोषकं प्रति) भद्र! शीघ्रमेव विद्योत्तमामाह्वयितुं डिण्डिमघोषेण सह तन्नामोच्चर।

डिण्डिमघोषकः– यथाऽऽज्ञापयति श्रीमान्।

[डिण्डिमं ताडयित्वा विद्योत्तमानामोच्चरति।]

विद्योत्तमा – (प्रविश्य) न्यायः कार्यो महाराज! न्यायः कार्यः।

विक्रमादित्यः – का त्वमसि बाले!

विद्योत्तमा – अहमस्मि काशीनरेशपुत्री विद्योत्तमा महाराज!

विक्रमादित्यः – (राजपुरुषं प्रति) अये भद्र! राजकुमार्या उपवेशनार्थमासन्दीमुपस्थापय।

विद्योत्तमा – नहि महाराज! प्रजेव न्यायमहं प्राप्तुमिच्छामि।

विक्रमादित्यः – कथय वत्से! त्वं कं न्यायं प्राप्तुमिच्छसि?

विद्योत्तमा – अहमेतत्प्रष्टुमिच्छामि महाराज! यत्पत्न्याः स्थानं क्वाऽस्ति?

विक्रमादित्यः – तस्याः पत्युश्चरणयोरेव भद्रे!

विद्योत्तमा – किं भवदीया सभैतत् स्वीकुरुते?

विक्रमादित्यः – कथं न?

विद्योत्तमा – नैवं महाराज! शृणु वचनम्,
अस्तीदृशोऽपि सज्जन एकः।
यो भवन्मतं नाङ्गीकुरुते,
तस्यैवाऽहं त्यक्ता पत्नी ॥12॥

विक्रमादित्यः – अस्तु, स ईदृशोऽस्ति।

विद्योत्तमा – आं महाराज!

विक्रमादित्यः – (साश्चर्यम्)
स कोऽस्ति राजसभायामस्यां तन्नामाक्षराणि विज्ञापय।

विद्योत्तमा – राजसभाभूषणं वर्तते स कालिदासः कविर्मे पतिः ॥13॥

विक्रमादित्यः – (साश्चर्यम्) किमुक्तम्? कविकालिदासस्ते पतिर्भद्रे!

विद्योत्तमा – आमेवं महाराज! (कविमुद्दिश्य)
मामयमग्निं साक्षीकृतय पूर्वं पत्नीमङ्गीकृतवान्।
परमधुना निजचरणसेविकामपि स्वीकर्तुं वाञ्छति नैव ॥14॥
तन्न्यायं कुरु न्यायप्रिय नृप!
उज्जयिनीश्वर! शृणु ममाऽर्चनम्।
परिणेता गच्छेत् परिणीताम्,
कविः कालिदासो मम भर्ता ॥15॥

विक्रमादित्यः – यद्येतत्सत्यम्! तदन्याय एव।

विद्योत्तमा – तदहमद्य न्यायं प्राप्तुमिच्छामि महाराज!

विक्रमादित्यः – त्वमवश्यमेव न्यायं प्राप्स्यसि। चिन्तां मा कार्षीः।

सभासदामेकः – मा कार्षीः सुभगे! त्वं चिन्ताम्,
न्यायो भविता त्वां प्रति नूनम्।
उज्जयिनीशो न्यायं कुरुते,
यस्य प्रसिद्धिर्विश्रुता जनैः ॥16॥

अपरश्चः – न्यायः क्रियतां राजन्! ह्यस्यै कविसेवावसरः प्रदाप्यताम्।
यस्माल्लोके कविजायेयं त्यक्ता पत्या दुःखं नेयात् ॥17॥

विक्रमादित्यः – मान्याः सभासदः! अधुनाहं कविं कालिदासं पिपृच्छिषामि यदियं काशीनरेशपुत्री विद्योत्तमा यत्किञ्चित्कथयति, तत्किं सत्यम्? कविकालिदासः स्ववक्तव्यं सभासदामग्रे खलु प्रस्तौतु।

कालिदासः – आं महाराज! सभासदो मम वक्तव्यं शृण्वन्तु–
तत्सत्यं नास्त्यखिलं राजन्!
पत्नीं मतवानिमां यदाऽहम्।
तदा पतिमियं नामन्यत माम्
भूयः कः पतिपत्नीबन्ध? ॥18॥

सभासदः – अस्य सम्बन्धेऽपि महाराजः शृणोतु–
कालिदासकथनं नोपेक्ष्यम्,
भवतो न्यायस्तादृशो भवेत्।
येन भवेतां द्वावपि तुष्टौ,
राजन्नित्थं प्रार्थयामहे ॥19॥

विक्रमादित्यः – अथ शृण्वन्तु मान्याः सभासदः, अस्मिन् पतिपत्नी-विवादे मम न्यायस्तादृशो भविता, यादृशं भवन्तः समीहन्ते। अधुनाऽहं विद्योत्तमामपि पिपृच्छिषामि यत्किमेतदपि सत्यमस्ति यत्कविकालिदासः कथयति। (विद्योत्तमां प्रति) भद्रे! निस्सङ्कोचं सर्वां लज्जां परित्यज्य तत्सर्वं कथय, यत्सत्यं स्यात्।

विद्योत्तमा – आं महाराज! यत्सत्यमस्ति, तदेवाऽहं कथयामि–
मया प्रतिज्ञा कृतैकदेयम्,
यन्मे पतिः स विद्वान् भविता।
यो मां पराजयेत विवादात्,
अभूत्तु तत्कर्तुमलं न कोऽपि ॥20॥

विक्रमादित्यः – भद्रे! पुनस्तव विवाहः कविना सह कथमभूत्?

विद्योत्तमा – (निर्भया भूत्वा) राजन्! पूर्वमयं कविर्नासीत्, परमेकोऽभूदज्ञजनः।

विक्रमादित्यः – तत्कथं त्वां शास्त्रार्थवादिनीं विदुषीमज्ञः परिणीतवान्? यत्सत्यं, तत्सर्वं कथय वत्से!

विद्योत्तमा — महाराज!
सा प्रतारणाऽऽसीत्पराजिता ये विद्वांस आनयन्।
सम्मिलितास्ते मूर्खमिह कविं मौनबुधं यमकथयन्।
श्रावयितुं तद् वृत्तमहं नृप! धारयामिलज्जाम्,
सर्वमयि! सत्यं कथये त्वाम् ॥21 ॥

विक्रमादित्यः — राजसुते!
त्यजलज्जां तथ्यं तथ्यं तद् यत्किञ्चित्प्रस्फोटय।
दुःखं पयश्च द्वे अपि भद्रे! परस्परं नो मेलय ॥
या संघटिता विज्ञे! घटना, श्रावय श्रावय ताम्।
वयं सत्यं कथयामस्त्वाम् ॥22 ॥

विद्योत्तमा — राजन्! तां छलपूर्णघटनां सर्वमेव कथयामि। एकादा मत्तः पराजिताः सर्वे विद्वांसः सम्मिलिता भूत्वा पूर्वमेनं मूर्खं मौन-पण्डितमुद्घोष्य मौखिकशास्त्रार्थस्थाने मौनशास्त्रार्थाय मां प्रेरितवन्तः। ततो गुरुकुलाचार्येण विज्ञापितैरिङ्गितसमाधानैः सन्तुष्टैः सर्वैः सभासद्भिः पराजिताऽहमुद्घोषिता। तदनन्तरमनेन मौनपण्डितेन सह पित्रा मे विवाहः कृतः। अहमप्येनं पतिमङ्गीकृत्य प्रमोदिताऽऽसम्।

विक्रमादित्यः — तत्त्वयाऽयं पतिरङ्गीकृतो भद्रे!

विद्योत्तमा — आमेवं महाराज! साम्प्रतमप्येनं पतिमहमङ्गीकुर्वे।

सभासदः — तन्नृप! कालिदासपत्नीयम्,
पुनरिमां स किं स्वीकरोति न?
भवन्नयोऽन्वेषयतु वस्तु तत्,
येन सत्यमस्त्वगोपनीयम् ॥23 ॥

विक्रमादित्यः — अथ यत्सत्यं भवत्समक्षं प्रकाशयति शीघ्र निजरूपम्।
सभासदः! शन्त्याहि भवन्तः कर्णयन्तु मम निर्णयरीतिम् ॥24 ॥

सभासदः — आं महाराज! भवन्न्यायः स्वमार्गमग्रेसरतु,
येन सत्यं शीघ्रमेव प्रकटितं भवेत्।

विक्रमादित्यः — मान्याः सभासदः! अथाऽहं कविकालिदासं पृच्छामि यत्स कथमेतत्कथयति यदियं विद्योत्तमा तं पतिं नाङ्गीकृतवती। (कविमुद्दिश्य)
कालिदास! विज्ञापय तथ्यम्, विद्योत्तमावचः किं सत्यम्?
निस्सङ्कोचं प्रकटय घटनाम्, यया द्वयोः स्याद् वियोगबोधः ॥25 ॥

कालिदासः — महाराज! सत्यं कथयेऽहं मेलनिशायां राजकुमारी।
पतिमस्वीकुर्वती तदेयं मामत्यजद् मूर्खमुक्त्वा नृप! ॥26 ॥

विक्रमादित्यः — किमेवं सत्यम्?

**कालिदासः** – आं महाराज! यत्किञ्चित्कथयामि, तत्सर्वं सत्यमेव। श्रूयताम्–
मम वचने स्यात् किञ्चिदसत्यम्,
किमपि भवेत् तत्कथने तथ्यम्।
तदयं दण्ड्यो जनोऽन्यथा वा,
स्वीकार्यो मम पत्नीत्यागः ॥27॥

**विक्रमादित्यः** – कविवर! भवांस्तु साम्प्रतमपि पत्नीत्यागचर्चां करोति। तत्किं विद्योत्तमावचनमेव सत्यम्?

**कालिदासः** – नहि महाराज! विवाहानन्तरं रात्रौ शयनकक्षे राजकुमारी विद्योत्तमा मां पतिमङ्गीकर्तुं निषेधितवती, कक्षाच्च बहिर्मां निस्सारितवती। तत्कथमधुनाऽहं पत्नीमिमामङ्गीकुर्याम्?*

**विक्रमादित्यः** – विद्योत्तमे! किमेतत्सत्यं यत्त्वं कविकालिदासं पतिमङ्गीकर्तुं न्यषेधीः।

**विद्योत्तमा** – नहि महाराज! नाहं कविकालिदासं पतिमङ्गीकर्तुं न्यषेधिषम्। पतिस्वीकारविषये मम प्रार्थनां शृणोतु भवान्–
अहमद्यापि पतिमिमं मन्ये, परमयमेको मम परिणेता।
यः परिणीतामस्वीकुरुते, तदहं भवतो न्यायमपेक्षे ॥28॥

**सभासदः** – महाराज! सत्यमेव कथयति विद्योत्तमा। अस्याः प्रार्थना स्वीकर्तव्या भवद्भिः। यतोहि–
न्यायप्रिय राजन्! न्यायः स्यात्, कविना पत्नी स्वीकर्तव्या।
पतिमद्यापि मन्यते सा तम्, अतो न पतिविरहः स्यादस्याः ॥29॥

[सभायां कोलाहलो भवति–न्यायः स्याद् न्यायः स्यादिति।]

**विक्रमादित्यः** – सभासद्वर्याः।
अये! भवद्भिः शान्तैर्भाव्यं न्यायः साम्प्रतमग्रे सरति।
सत्यं समक्षमागच्छति भोः! सावधानमखिलं निशम्यताम् ॥30॥

**सभासदः** – राजन्! भवानधुना कविकालिदासं कथयतु यत्स स्वपत्नीमङ्गीकुर्यात्।

**विक्रमादित्यः** – कविवर! अथ भवान् किं वक्तुमनाः? स्वपक्षं पुष्णातु।

**कालिदासः** – महाराज! विद्योत्तमा यत्किञ्चदुक्तवती, तत्सर्वमसत्यमेव। सम्प्रति मम सत्यवचनं श्रूयताम्–
तस्यामियं मेलराकायाम्, स्वधवं यदि मामग्रहीष्यदिह!
तदियमद्य न स्थितिरभविष्यद् यस्या नृप! साम्मुख्यं क्रियते ॥31॥
यया कृतो न पुरा पतिमानस्तामहमद्य न पत्नीं मन्ये।
अवसरवादिनीयमपि तन्मे पत्नीत्यागपत्रमुररीकुरु ॥32॥

**सभासदः** – किं महाराज! कविकालिदासेन पत्नीत्यागपत्रमपि दत्तम्?

**विक्रमादित्यः** – आम्, तेन त्यागपत्रमपि दत्तम्।

सभासदः — तत्तेन त्यागपत्रेण सर्वे सभासदो विज्ञापिता भवेयुः। अतस्त्याग-पत्रं वाचयित्वा श्राव्येत राजन्!

विक्रमादित्यः — (लिपिकारं प्रति) अये! अभिलेखरक्षक! यत्त्वया कविकालिदासात् पत्नीत्यागपत्रं प्राप्तम्, तत्सभायामत्र वाचयित्वा प्रकाश्यताम्।

त्यागपत्ररक्षकः— (उत्थाय त्यागपत्रं करे गृहीत्वा) मान्याः सभासदः! महाराजस्याऽऽदेशाऽनुसारेणाऽहं कविकालिदासस्य पत्नीत्यागपत्रं वाचयित्वा श्रावयामि। कविकालिदासेनाऽत्र लिखितम्—

राजाधिराज नृप उज्जयिनीनरेश!
आदित्य विक्रम! अहं कविकालिदासः।
काशीनरेशदुहितुर्यदिदं विरुद्धम्,
आवेदये सविनयं शृणु तद्धि देव ॥33॥

विद्योत्तमा वदति मां पतिमात्मनः सा, सर्वत्र जीवनपथे प्रददाति बाधाम्।
स्वात्मा यया नहि कदापि समर्पितो मे, भूयः कथं मिथुनबन्धनमद्य राजन्! ॥34॥

षड्वर्षपूर्वमनया भवने स्वकक्षात्,
निष्कासितः स्वशयनादवतारितोऽहम्।
कायोऽपि मह्यमपि नैव समर्पितः स्वः,
भूयः कथं मिथुनबन्धनमद्य राजन् ॥35॥

पूर्वं त्वियं विपदि मां पतिमग्रहीन्नो, किन्त्वद्य सम्पदि हि मामुपयाति रन्तुम्।
किं व्यस्मरद् मुखकृतां मम भर्त्सनां ताम्, भूयः कथं मिथुनबन्धनमद्य राजन्! ॥36॥
पश्चान्निजात्परिणयादनया कदापि, निर्वाहितो न परिणीतरमात्वधर्मः।
शारीरिकं किमपि नाऽभवदर्पणं नौ, भूयः कथं मिथुनबन्धनमद्य राजन्! ॥37॥

राज्ञः सुतेयमभिमानमपीह धत्ते
न श्रद्दधाति हि पतिं प्रतिबोधयुक्ता।
मन्ये प्रियां न तदिमां परिणीतपूर्वाम्,
तत्त्यागपत्रमुररीकुरु मेऽद्य राजन्! ॥38॥

विक्रमादित्यः — सभासद्वराः! श्रुतं भवद्भिः कविकालिदासस्य पत्नीत्यागपत्रम्!

सभासदः — श्रुतं राजन्! कविना स्वीये पत्नीत्यागपत्रे यल्लिखितं, तदनुसारमियं विद्योत्तमा तस्य विवाहितपत्नी वर्तते, परमनया स्वकायसम्पर्कस्तेन सह कदापि न कृतः। अतः सा तस्य त्याज्यैव।

[त्याज्यैव, त्याज्यैव—इति शब्दाः सभायां श्रूयन्ते।]

विद्योत्तमा — (सतारस्वरम्) अन्यायोऽयम्, अन्यायोऽयम्। अयि भोः!
शृणुत हि कर्णधारमुख्यानां कर्णाः! वदत मुखानि!
अन्यायोऽयं नरस्य नारीं प्रति किमहं करवाणि?

राजसभायां स्थितः कविः स्वीकुरुते न सत्यताम्।
इतो मे राम! विलोकय माम् ॥39 ॥

**सभासदामेकः** — मैवं वद, मैवं वद बाले! शृणु—
राजसभेयं विक्रमस्य सा, या न्यायेन प्रसिद्धा।
देशे देशे नयैर्वैभवैर्धनादिकेन समृद्धा।
अस्याः ख्यातिः सरति सर्वतस्त्वं नो विस्मर ताम्।
वयं सत्यं कथयामस्त्वाम् ॥40 ॥

**विक्रमादित्यः** — शृण्वन्तु सभासद्वर्याः। अधुनाऽहं राजकुमारीं विद्योत्तमां स्वपक्षपोषणाय कथयामि। कविना कालिदासेन स्वस्मिन् पत्नीत्यागपत्रे यत्किञ्चिदावेदितम्, तत्सर्वं किं सत्यम्? सा निस्सङ्कोचं वदतु।

**विद्योत्तमा** — तन्निखिलं यत्किञ्चित्कविना लिखितं सत्यमस्ति हे राजन्!
मन्ये बुधं कविमिमं स्वपतिं कालिदासमज्ञं न तं परम् ॥41 ॥

**विक्रमादित्यः** — अयि राजपुत्रि!
न कालिदासः कवि केवलो राजकविरपि स राजपूजितः।
कविरयं हि मे सभाभूषणम्, परमिममज्ञं कथं वदसि भोः? ॥42 ॥

**विद्योत्तमा** — महाराज! कविकालिदासमहं पतिं मन्ये, परं मूर्खकालिदासं तु नो।

**विक्रमादित्यः** — कालिदासस्तु कविरस्ति, मूर्खस्तु नास्ति।

**विद्योत्तमा** — अद्याऽयं कविर्विद्वांश्च वर्तते राजन्! परं पूर्वन्त्वयं मूर्ख आसीत्।

**विक्रमादित्यः** — पूर्वं तु सर्वो जनो मूर्खो भवति, पश्चादेव स विद्याभ्यासेन विद्वान् सञ्जायते। मन्ये, पूर्वं स मूर्ख आसीत्, तत्किम्? स मूर्खोऽपि तव पतिरासीत्। शृणु राजकुमारि!
भारतीयनारी तु सेवते मूर्खमपि 1तिं, त्यजति नैव तम्।
त्वया तदाचरितं न, कविमिमं लब्धुं किमसि वक्तुकामा त्वम् ॥43 ॥

**विद्योत्तमा** — भूप! भवत्कथनं मन्येऽहम्, परमत्राऽयं पत्नीधर्मः।
यत्सा मनसा वाचा नित्यम्, कामयेत कर्मणा पतिहितम् ॥44 ॥

**विक्रमादित्यः** — तत्त्वं किं पतिहितमकार्षीः?

**विद्योत्तमा** — महाराज!
तया हि भावनया तदाचरम्, येनाऽज्ञादयमभूत्कविर्ज्ञः।
वचनमस्तु चेदनृतं मे नृप! तदहं दण्ड्या, पृच्छ कविमिदम् ॥45 ॥

**विक्रमादित्यः** — किमस्य कवित्वस्य त्वमेव कारणं राजपुत्रि!

**विद्योत्तमा** — आमेवं महाराज! यद्यहं तस्यां मेलननिशायामेनं पूर्वमूर्खं कालिदासं पतित्वेनाऽग्रहीष्यम्, तदयमद्य कविर्नाभविष्यत्। वार्तालापेन तदाऽस्य मूर्खत्वं ज्ञात्वाऽहमेनं बुधीकर्तुं शयनकक्षान्निरसारयम्। अतो मम कारणादेवाऽयं

कविरभवत्। यद्यत्र किमप्यसत्यं स्यात्, तदहमनेन कविनाऽवश्यमेव त्याज्या भवेयम्।

**विक्रमादित्यः** — कथय कवे! किमिदं सत्यम्? यदियं विद्योत्तमा कथयति।

**कालिदासः** — बाढं महाराजाधिराज! विद्योत्तमाकथनं पूर्णतया सत्यमेव।

**विद्योत्तमा** — भोः! सांसदवर्याः शृण्वन्तु, कथितं द्वयोरसत्यं नास्ति।

तद् द्वावपि पतिपत्न्यौ मन्ये, स्वीकृतो न कविपत्नीत्यागः ॥46॥

कविना स्वैर्वक्तव्यैः सम्प्रति, विद्योत्तमा स्वीकृता पत्नी।

वियोगकाले कृतः केनचिद् विवाहान्तरो नैव स्वेच्छया ॥47॥

**सभासदः** — वरं महाराज! वरम्!—

निष्पक्षोऽयं भवतो न्यायो येन पयोदुग्धे पृथक्कृते।

यथा प्रकृत्या सम्मिलतस्ते पतिपत्न्यावपि तथा महीप! ॥48॥

[न्यायोऽयं न्याय इति शब्दैः, सर्वत्र हर्षः प्रसरति।]

**विक्रमादित्यः** — मन्त्रिन्! कविकालिदासस्य पत्नीत्यागपत्रस्य निरासस्य घोषणा क्रियताम्, येन पतिः पत्नीपाणिग्रहणं कुर्यात्।

**न्यायमन्त्री** — मान्याः सभाजनवर्याः! महाराजस्य श्रीवीरविक्रमादित्यस्याऽऽदेशाऽनुसारेण कविना कालिदासेन प्रदत्तस्य पत्नीत्यागपत्रस्य निरासः क्रियते।

**विक्रमादित्यः** — कविवर! विद्योत्तमेयं ते पत्नी! इमां मे निर्णयानुसारमङ्गीकुरु।

शृणु—विश्वासं कुरु खलु कथयामो राजसुताया वचनात्।

कवे! पतिं मन्यते त्वामियं परं किमन्यत्कथनात्?

युवयोर्द्वयोर्मिथुनता लोके स्वस्थानं लभताम्।

वयं सत्यं कथयामस्त्वाम् ॥49॥

**कालिदासः** — महाराजो यदा ज्ञापयति, तदेवाऽहं स्वीकुर्वे। परमियमपि भवद्भिरनुशासनीयाऽस्ति।

**विक्रमादित्यः** — विद्योत्तमे! त्वमपि पतिमनुनय मधुरगिरा च प्रसादय, येन द्वयोरत्र सुखदसम्मेलनं भवेत्।

**विद्योत्तमा** — राजन्! भवदाज्ञयाऽहं तदेवाऽऽचरामि, यद्भवान् कामयते।

(कालिदासं प्रति) कविवर!

त्वं मे पतिर्भार्याऽहं ते स्खलितं कृतं क्षमस्व।

नमामि, चरणौ स्पृशामि ते प्रिय! दयस्व मयि च रमस्व।

मामिच्छसि तद् गेहं नय मां, स्वीकुरु मे रतिधाम।

इतो मामवलोकय मे राम! ॥50॥

**कालिदासः** — राजपुत्रि! विद्योत्तमे! प्रिये!

अहं पतिस्ते त्वं मे पत्नी कामोऽहं च त्वं रतिः।

त्वं मे प्रियकल्पना कविरहं मार्गोऽहं च त्वं गतिः।

मम जीवनसहचरी त्वमसि ते स्वीकरोमि रतिधाम।
प्रिये! त्वं चल गृहमनुसर माम् ॥51 ॥

विक्रमादित्यः — (सहर्षम्)
राजसुते! त्वं जिता, मन्यते पत्नीं त्वामयं कविः।
पश्य, वारिदान्मुक्त आभया सार्धं शोभते रविः।
तव शोभा भवितेमं लब्ध्वा त्वस्य च लब्धवा त्वाम्।
अतस्त्वं गच्छेः कविवरधाम ॥52 ॥

[कवे! पत्नीं गृहीत्वा भवनं गच्छ—इति शब्दैः सर्वत्र हर्षो भवति, कविश्च पत्नीकरं गृहीत्वा ततो भवनं गच्छति।]

पटीक्षेपः। निष्क्रान्ताः सर्वे।

इत्यष्टमोऽङ्कः।

उत्तरभारत एटाजनपद—सोरोंनगरनिवासी,
होतीलालकलावत्योः पुत्रो मिश्रयोरात्मवान्।
वसुभूखनेत्र 2028 विक्रमवर्षे रामकिशोरमिश्र इह,
त्यागपत्रनिरासमिति दृश्यं नाटकमेतत्कृतवान् ॥

रामकिशोरमिश्रकृतं त्यागपत्रनिरासं नाम नाटकं समाप्तम्।

रामकिशोरमिश्र

# कालिदासस्वान्तसुकुमारता

एन. सि. वि. नरसिंहाचार्यः

श्रीनिवासमुखचन्द्रनिर्गता स्वांशुलेशपरिभूतकौमुदी।
भक्तलोकभवतापहारिणी मन्दहासरुचिराशु वोऽवतात्॥

"कण्वः—अहो सन्निहितदेवतास्तपोवनतरवः!
पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नाऽऽदत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम्।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्॥"

उपरिष्टात् निर्दिष्टः स सम्बोधनः श्लोकः नाटकोत्तमात् शकुन्तलात् चतुर्थाङ्कात् उदाहारि स च रसघना इति तत्र श्लोकचतुष्टयमिति च उपश्लोक्यमानेषु चतुर्षु श्लोकेषु द्वितीयः प्रवासा प्रतिनिवृत्तेन काश्यपेन सकलोऽपि शकुन्तलागत उदन्तो यथातथमवेदि। गृहस्थधर्ममनुरुध्य अनुपदमेव दुहितरं पतिकुलं प्रेषयितुं निरणाय। तदर्थं सकलं संविधानकं व्यधायि। प्रवसताजनेन प्रियजनेभ्यः अभ्यनुज्ञा प्रार्थ्यत इति परिपाटी। शकुन्तलायाः प्रतिनिधीभूय तात एव तत्कार्यं निर्वर्तयति; श्लोकेनाऽनेन अनुज्ञां याचतो आश्रमे निवसद्भ्यः तापसेभ्योऽत्र अनुमतिः न लिप्सिता। अपितु देवतात्मान इति अभिमन्यमानेभ्यः तरुभ्यः सा प्रेप्सिता। इदमतिहृद्यम्। अत्रैव सौकुमार्यस्य सूत्रपातश्चक्रे। आग्रन्थ-समारम्भात् शकुन्तलायाः अनसूयाप्रियंवदाप्रभृतिष्विव तरुगुल्मलतादिषु आश्रमवासिषु मृगेषु च असाधारणः प्रेमा अस्तीति सूच्यते। 'अस्ति ममाऽपि सोदरस्नेह एतेषुं इत्यादि वाक्यैः पुत्रकृतकस्य दीर्घापाङ्गस्य हरिणपोतस्य उदन्तेन, वनज्योत्सनीसमाह्वय नव-मालिकावृत्तान्तेन अन्यैश्च बहुभिस्सन्दर्भैः सः स्फुटीभवति' तां वार्तां जानानः लोकज्ञानमग्रणीः कण्वः शकुन्तला लज्जया सङ्कोचेन वा स्वयं पादपेभ्योऽनुज्ञामधिगन्तुं न प्रवर्तेतेति स्वयमेव तत्करोति।

"भोस्तरवः! या युष्माभिः जलपाने अकृते स्वयं जलपानाय स्पृहामपि न करोति, अलङ्करणे अधिकारवत्यपि आत्मानं भूषयितुं भवत्सु स्नेहेन नैकमपि किसलयमुपादत्ते। भवत्सु प्राथमिकं पुष्पोद्गमं विलोक्यमहोत्सवमातनोति, तादृशी शकुन्तला अद्य गन्तव्यमिति पतिकुलं जिगमिषति। युष्माभिस्सम्भूय अनुमन्यतात्" इति श्लोकसङ्ग्रहार्थः मयाऽत्र चापलेन रसानुभवः किञ्चिदिव विधीयते—

'पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या इति वाक्यस्वारस्येन, स्वयं बलवत् तृषार्दिताऽपि यावत् वृक्षान् जलसेचनेन न तर्पयति तावज्जलं न पिबतीत्येव न, पानाय, न त्वशनाय सङ्कल्पं प्रयत्नमात्रमपि न करोति। वृक्षाणां सकलविध आहारः जलमेव। तेषां आहारतृप्तिः यावन्न सम्पाद्यते तावत् सा न भुनक्तीत्येव न जलपानव्यवसायमपि न करोतीति

श्रद्धातिशयो व्यज्यते। युष्मास्विति बहुवचनेन एकस्मिन्नपि वृक्षे असिक्ते जलं नाऽभिलषतीति कविना बुबोधयिषितम् अपि च, व्यवस्यतीति वर्तमानकालवाचकतिङन्तप्रयोगेण, न केवलं पूर्वं, परन्तु सार्वभौमी भूत्वाऽपि अद्याऽपि अस्मिन् गमनदिवसेऽपि सा तथैवाऽनुतिष्ठति महिषीत्व प्रयुक्तः दर्पो वा अनादरो वा लेशतोऽपि नाऽस्ति किन्तु प्रभाते प्रातरेवोत्थाय स्वशरीरपोषणमवधीरयन्ती वपुषः शिरीषपुष्पगाधिकसौकुमार्यमपि अगणयन्ती केवलमात्मनः आयासहेतुकं तरु-पोषणमेव जलसेकादिना करोतीति सूच्यते।

एवं पोषितेभ्यो वृक्षेभ्यः पत्रपुष्पाद्युपादानेन प्रत्युपकारमपि सा नाऽनुमन्यते इत्याह-'नाऽऽदत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम्' इति। क्षत्रियात् देव कान्तायामुत्पादितेयं शकुन्तला। अतोऽलङ्कारप्रीतिस्तस्या नैसर्गिकी। ततो मण्डनाय किसलयलवनप्रसक्तिरस्ति। तथाऽपि सा न तत्करोति। कुतः तादृशः स्नेहस्तस्यामहीरुहेषु। बह्वायाससाध्यं परिरक्षणं विधाय, परिरक्षितेभ्योऽपि पादपेभ्यः स्वालङ्काराय नवदलमपि न गृह्णाति। अत्र 'भवता' मिति बहुवचनं पल्लवमित्येकवचनञ्च अत्यन्तरसपोषके। भवतां आत्मना अभिवर्धितानां बहूनां वृक्षाणां मध्ये एकस्याऽपितरोः एकं किसलयमपि सा न छिनत्ति, किमु वक्तव्यं बहुपल्लवच्छेदोहः दूरापास्त इति। पल्लवमित्येकवचनेन लीलया प्रमोदन वा एकमपिपल्लवं न कृलतीति भावः। दुर्दममपि मण्डनाभिलाषं सयम्य वृक्षाणामपत्यकृतकानां मासस्म स्वल्पाऽपि पीडा भूदिति अहो! एक पल्लवभङ्गमपि कदाऽपि सा न चकारेति तस्याः तरुषु समादरोऽसाधारणः।

इयं देव न, अपितु तेषु वृक्षेषु वर्तमानाबन्धुजननिर्विशेषा प्रीतिः तां काले काले उत्सवानपि कर्तुं प्रेरयामासेत्याह—'आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः' इति। 'उत्सवप्रियाः खलु मनुष्याः'। ते स्वापत्यानां जन्मदिनादिकं पुरस्कृत्य उत्सवं प्रवर्तयन्ति। पुत्रिकाया यौवना-भिव्यक्त्यादिकं सम्भावयन्ति। अस्यास्तु वृक्षा एव सर्वस्वायन्ते। तेषामभ्युदय एव तस्याः परमानन्दकारणम्। यदि तेष्वन्यतमः स्वपुष्पोद्गमं प्रदर्शयति, तमुद्वीक्ष्य हर्षमाविष्कुर्वती शकुन्तला तं दिवसं उत्सवकाल इति प्रकटय्य महोत्सवं प्रवर्तयति। सर्वान् बन्धून् समाह्वान-सपीति-सजग्धि-ताम्बूलपुष्पफलदानादिना सम्भावयति। प्रथमकुसुमप्रसूतिसमय एव तस्याः उत्सवः। 'उत्सवे हर्षमित्येष उत्सवः परिकीर्तितः।' इति महता समारोहेण हर्षसज्जननक्षमाः सर्वाः क्रियाः प्रवर्तयति।

आम्। शकुन्तलायाः वर्तते महतीश्रद्धा महीरुहेषु; तिष्ठतु-ततः किमद्य कर्तव्यम् इत्यत्राऽऽह—"सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्" इति।

सेयं, या युष्माकमस्मकमपि शुश्रूषणपरा, पूर्वोक्त-विधया प्रदर्शितनिर्भरप्रणया, प्राणेभ्योऽप्यतिगरीयसी एषा दृश्यमाना शकुन्तला याति, अद्यैव गच्छति। कालविलम्बावकाशो नाऽस्ति। शुभा वेला अतिक्रामेत्। युष्माभिस्सर्वैः सम्भूय अनुज्ञा अनुपदमेव दीयताम्। सहवासपरित्यागिन्यै सर्वमत्यस्मासु स्नेहं सन्त्यज्य स्वानन्दाय व्रजन्त्यै स्वार्थ-परायै कुतोऽस्माभिः अनुज्ञा देया? किं तस्या अस्मदनुज्ञापेक्षा वर्तते वस्तुतः' इति न चोदनीयम्। यत्र कुत्राऽपि विलासाय वा, विहाराय वा, विनोदाय वा सा न गच्छति। पतिगृहमेव याति। भवद्विरहा सहाऽपि 'पातीति पतिः' 'भर्तारक्षति यौवने', 'भर्ता नाम परं नार्या भूषणं भूषणादपि', 'सतीमपि ज्ञातिकुलैकसंश्रयां

जनोऽन्यथा भर्तृमतीं विशङ्कते', 'समीपे परिणेतुरिष्यते...प्रमदा' इत्यादिकमनुशासनमनुचिन्तयमाना, लोकरीतिमनुरुन्धाना, धर्म्यं मार्गमनुस्वन्दधाना, सहधर्मचारिणीधर्ममनुध्यायन्ती, धर्म-प्रजाजननमुनस्मरन्ती, पितृवाक्यमनुसरन्ती यातव्यमित्येव याति। स्वयमनुज्ञां याचितुमपि न पारयति अहं प्रार्थये, अनुज्ञा दीयताम् अन्यथा तस्या गमने प्रवृत्तिर्न स्यात्। धर्मपद्धतिं विजानतां युष्माकं अनुमतिवितरणमपि युक्तरूपं, प्राप्तकालञ्च। 'सर्वैरिति बहुवचनेन एकतमेनाऽपि अनुज्ञाया अप्रदाने तस्या महद्दुःखमायतेत। ततस्सर्वैरपि अविलम्बितमनुज्ञायताम् ततस्सा गमनोन्मुखं मनः कुर्यात्' अत्र तरव इति—

तलागुल्मादीनामप्युपलक्षणम्।

श्लोकोऽयं परिशील्यताम्—

"यस्यां न प्रियमण्डनाऽपि महिषी देवस्य मन्दोदरी
स्नेहालुम्पति पल्लवान्न च पुन र्वीजन्ति यस्यां भयात्।
वीजन्तो मलयानिला अपि, करैरस्पृष्टबालद्रुमा
सेयं शक्ररिपोरशोकवनिका भग्नेति विज्ञाप्यताम् ॥"

अभिषेकनाटके भासरचिते हनुमता अशोकवनिका भग्नेति प्रभवे रावणाय निवेदनीयमिति वनवालकेन सन्दिश्यमानमिदं पद्यमुपलभ्यते। इदं भासरचितमिति, अयं भासं कालिदासात्प्राचीन इति च विश्वस्य किञ्चित्पराम्रष्टुमुत्सहे।

'पातुं न प्रथमम्' इति, 'यस्यां न प्रियमण्डनां इति च श्लोकद्वये परिशील्यमाने तयोर्मध्ये शब्दतो भावतोऽर्थतश्च, वृत्ततो शैलीतश्च साम्यं प्रव्यक्तं भवति प्रियमण्डना स्नेह पल्लवादिशब्दाः उभयसाधारणाः। 'पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या' इत्ययमंशोऽधिकं कालिदासपद्ये। 'करैरस्पृष्टबालद्रुमा' इत्ययमंशः भासपद्यस्थः कालिदासेन उज्झितः 'पल्लवान् लुम्पति' इति भासः। 'नाऽऽदत्ते पल्लवम्' इति कालिदासः। एतादृशे निवहि महदौचित्यं, स्वारस्यञ्च गोचरीभवतः बालद्रुमाः करैरस्पृष्टा' इति वाक्येन तरुणद्रुमाणां जरठद्रुमाणाञ्च हस्तस्पर्शाभिभवः प्रसक्तो भवेत्। तदपि न सहते कालिदासः तादृशभेदबुद्धिस्फोरकं वाक्यांशमुपेक्षाञ्चक्रे। 'न च पुनर्वीजन्ति यस्यां भयाद्वीजन्तो मलयानिला अपि' इत्ययमंशो भावतुन्दिलोऽपि रावणचण्डवृत्तसम्बन्धी-नाऽत्र युज्यत इति त्यक्तः। भासकृतः पल्लवानित्यत्र बहुवचनस्य, छेदनार्थकलुम्पतेश्च प्रयोगः, मन्ये कालिदासहृदयेतिपेशलेऽतिमहतीं व्यथामजीजनदिति। छेदनं कर्णारुन्तुदम्। तस्मादुद्विजते कविः। न लुम्पतीति निषेधरूपेणाऽपि छेदनप्रसक्तिं बहूनां पल्लवानां न सहते कालिदासः अतएव पल्लवा नित्यमुक्त्वा पल्लवम् इत्येकवचनान्तं पदं, न लुम्पतीत्यनुक्त्वा नाऽऽदत्ते इत्यनुद्वेजकं पदञ्च प्रयुयोज कविः। तथा अत्यन्तसुकुमारचित्तवृत्तिः कालिदासः पारुष्यं सर्वदा, सर्वथा परिजिहीर्षति। 'वैदर्भीरीतिसन्दर्भे कालिदासः प्रगल्भतः' इत्यभियुक्ता आमनन्ति। अत्र संन्दर्भे सौकुमार्याख्यः अर्थगुणः परिपुष्टः।' अपारुष्यं सौकुमार्यम्' इति वामनाचार्यः परुषेऽर्थे वक्तव्येऽपि अपारुष्यमाश्रित्य सुकुमारसरण्या बोधनमेव सं गुणः। पल्लवान् न लुम्पतीति वक्तव्ये तमेवाऽर्थं 'पल्लवं नाऽऽदत्ते' इति वर्णयन् कविः बहुवचनान्तप्रयुक्तं पारुष्यं एकवचनेन, छेदनप्रयुक्तां

निष्कृपताञ्च नाऽऽदत्ते इति प्रयोगेण च परिजहार 'एवं भासश्लोकं अनुसारन्निव दृश्यमानोऽपि तत्रैवाऽधिकां सम्पुष्टिं कल्पयामास कविकुलगुरुः। 'संवादास्तु भवन्त्येवा बाहुल्येन सुमेधसाम्'। स्थितं ह्येतत् संवादिन्य एव मेधाविनां बुद्धयः। किन्तु नैकरूपतया सर्वे ते मन्तव्या विपश्चिता कथ-मिति चेत् संवादोऽह्यन्यसादृश्यं, तत्पुनः प्रतिबिम्बवत्, आलेख्याकारवत् तुल्यदेहिवच्च शरीरिणाम्। तत्र पूर्वमनन्यात्म तुच्छात्म तदनन्तरम्। तृतीयन्तु प्रसिद्धात्म नाऽन्यसाम्य, यजेत्कविः। इति ध्वन्यालोकोपदेशः। (IV. 11.13. p 546)

"अनौचित्यादृते नाऽन्यद्रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा॥"

सुकुमारतासारसर्वस्वभूतोऽयं श्लोकः। ध्वन्यध्वन्यध्वन्यः कालिदासः। अपत्येष्विव तरुषु अत्यादरवत्याः शकुन्तलायाः स्वशरीरपोषणमप्यनादृत्य तरूणां जलसेचनाय चेष्टमानायाः स्वीयपिपासोपशान्तयेऽपि अप्रयतमानायाः वात्सल्यरूपा सुकुमारता, स्वयमलङ्कारप्रियाऽपि अवतंसादिकरणाय पल्लवच्छेदे क्रियमाणे तरुणमङ्गविच्छेदादिव मर्हतारुजा भवेदिति एकमपि पल्लवमलुम्पत्याः क्रूरतापरिहरणात्मकदयाप्रयुक्तसुकुमारता, पुष्पिते कस्मिंश्चन तरौ तदुपवीक्ष्य स्वस्वान्तस्फूर्तं हर्षातिरेकं सजग्ध्यादिना महोत्सवेन सम्भावयन्त्याः प्रकृत्यामपि मैत्रीप्रदर्शन-रूपा सुकुमारता, तस्याश्चितवृत्तिं विजानतः 'चूतेन सङ्गतवती नवमालिकेयमस्यामहं त्वयि च सम्प्रति वीतचिन्तः' इति वदतः, सहकारसङ्गतां नवमालिकां दुष्यन्तसार्वभौमसङ्गतां शकुन्तलाञ्च दृष्ट्वा वीतचिन्तः भारापगमे सुखीसंवृत्त इति निर्भरामुभयत्र समां परमतृप्तिं प्रकटयतः, शकुन्तलाया इव स्वस्याऽपि लतादिषु वात्सल्यमाविष्कुर्वतः, पतिगृहं गच्छन्ती तदुदन्तं निवेद्य अनुज्ञामधिगन्तुं ह्रीणा सा न तत्र धृष्णोतीति चिन्तयित्वा स्वयमेव तदर्थे तत्कुर्वतः, एकेन तरुणा अनुमत्यप्रदानेऽपि सा गन्तुं सह्रिहितेति पर्यालोचयतः, अतस्सर्वैरिति ब्रुवतः वात्सल्यनिघ्नस्य महर्षेः काश्यपस्य हृदयसुकुमारता, पल्लवान् लुम्पतीत्यत्र प्रयोगवैशसमसहमानस्य कवेः भावसुकुमारता, इति एतावतीः अन्याश्च सुकुमारता एकत्र उपनिबध्नतः कालिदासस्य प्रतिभासुकुमारता इति भावुकैर्भाग्यमाना एता स्सुकुमारताः तेषां हृदयानि सुकुमाराण्यपि सुकुमारतराणि विधातुं प्रभवेयुरिति दृढं विश्वसिमि।

अत्यर्थसुकुमारमनुमन्यं सन्निवेशमुपक्षिपामि। सादृश्य-प्रतिकृति-स्वप्नदर्शन-तदङ्गस्पृष्ट-स्पर्शनाख्यानि, चत्वारि विरहिणां विनोदस्थानानि प्रसिद्धिः तथाचोक्तं गुणपताकायाम्—

"वियोगावस्थासु प्रणयिजनसदृशानुभवनं
ततश्चित्रं कर्म स्वप्नसमये दर्शनमपि।
तदङ्गस्पृष्टानामुपनतवतां स्पर्शनमपि
प्रतिकारोऽनङ्ग व्यथितमनसां कोऽपि कथितः॥"

अबलाविप्रयुक्तः कश्चिद्यक्षः रामगिर्याश्रमेषु वसन्भर्तृशापेन अस्तङ्गमितमहिमा, पुनरुत्प्लुत्य गत्वा कान्तया सङ्गन्तुमप्रभविष्णुः उपर्युक्तैरुपायै र्विरहविनोदं कथञ्चित्सम्पाद्य प्राणान् धारयितु-कामः तदर्थं प्रयस्यति। प्रतिकूलदैव स्स तावन्मात्रसुखस्याऽपि अभाजनं तत्राऽपि धन्यतां न विन्दति।

यक्षः प्रथमतः सदृशवस्तुदर्शनेन मन्मथा व्यथां प्रतिकर्तुं प्रयतते। तत्र च चरितार्थता न सम्पद्यते। कुतः? कथ्यते।

"श्यामास्वङ्गं, चकितहरिणीप्रेक्षणे दृष्टिपातं,
गण्डच्छायां शशिनि, शिखिनां बर्हभारेषु केशान्।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्थं क्वचिदपि न ते भीरु (चण्डि) सादृश्यमस्ति ॥"

'भीरु!' इति सम्बुद्धिरत्र भावमधुरा, पश्यत योहि जनः कातरहृदयो भवति, नाऽसौ सर्वस्वमेकस्थं धारयति। लोके हि कश्चित्सम्पन्नः स्वकीयं कृत्स्नमपि धनं एकस्मिन् धनागारे (ठंदा) न निक्षिपति। परन्तु बहुत्र निक्षिपति एकस्य धनागारस्य केनाऽपि कारणेन ध्वंसेऽपि अन्यत्र धनमवशिष्येत दस्युभिरेकस्मिन् धनागारे लुण्ठितेऽपि अन्यत्र वित्तं विन्देयमिति तथा स्वदयिता सौन्दर्यरूपं वसु नानास्थलेषु न्यस्यति, यतोऽनेन विरहिणा एकत्रैव स्वसखीसादृश्यं न साक्षात्क्रियते। स तां न्यथामसहमानः एव माक्रन्दति-सुगन्धिप्रियङ्गुलतासु स्वकीय-मङ्गन्यासीकृतम् श्यामालता स्वतस्तन्वी पाण्डुवर्णाकण्टकिता च। स्वदयिताकामोऽपि तनुः पाण्डुः सततप्रणेश्वरगतचिन्तया कण्टकितश्च अत स्तयो स्सादृश्यम्। चकितहरिणीप्रेक्षणे दृष्टिपातो निक्षिप्तं सानिसर्गत एष त्रस्तैक हायनकुरङ्गविलोलदृष्टिरित्येवमूह्यते। चन्द्रमसि कपोलच्छविर्निहिता। विरहदशासुलभेन पाण्डिम्ना मण्डितस्य गण्डयुगलस्य पाण्डुरेण शशिनासाम्ये औचित्यमस्ति। कलापि कलापेषु चिकुराः, तरलासु कुटिलकुटिलासु प्रतनुषु तरङ्गिण्या ऊर्मिषु 'न तु सागरस्य' भ्रूविलासाश्च न्यासीकृताः। ईदृशस्य अभ्यूहस्य सर्वत्र सादृश्यमेव हेतुः। तथा तत्र तत्र न्यासीकृतान् तांस्लान् अर्थान् जीवितसन्धारणप्रत्याशया उत्पश्यामि, न तु पश्यामि तत्सत्यं वा मिथ्यावाऽस्तु उल्लिख्य भावयामि। तथाऽपि एकत्र सर्वसाम्यं नोपलभे। इतस्तः प्रत्याशाविशस्यमानहृदयो बम्भ्रमीभि। क्वचित् क्षणमपि धृतिं न लभे। हन्त! आयासमात्रपात्रीकृतात्मा परिक्लिश्ये इति भावः।

श्यामालतास्वपि ऋतुप्रभावेन कदाचित देवकोमलत्वादिकम् हरिणेष्वपि चकितत्वादि हेतुसापेक्षत्वेन अनियतं चपलत्वम्। पूर्णे एव कलानिधौ समग्रः कान्तिविस्तारः, अन्यदा न। पूर्णत्वेऽपि कलङ्कित्वमू, इति कादाचित्कं किञ्चिदेव लावण्यम्। शिखिनां बर्हभारेषु केशपाशमेव पश्यामि, न तु संस्कृतं प्रसाधितं धम्मिल्लं पश्यामि। नदीवीचिषु तनुतरास्वपि तरङ्गाणां वातपोतचलनविशेषप्रयुक्तत्वात् भ्रूविलासाः जातुचिदेव दृश्यन्ते। तथाऽपि तावन्मात्रमेव लेशतः संविभक्तं सादृश्यं दृष्टा वा तृप्यामीतिप्रवृत्तोऽहं एकत्र सर्वमीक्षितुं न पारयामि। 'सा निर्मिता विश्वसृजा प्रयत्नादेकस्थ सौन्दर्यदिदृक्षयेव'। इति रीत्या 'सा रामणीयकनिधेरधिदेवता वा सौन्दर्यसारसमुदायनिकेतनं वा' भवतीति द्योत्यते।

अत्र भीरुपदस्य स्थाने चण्डीति सम्बुद्धिः पाठान्तरम् अस्ति चण्डि! अत्यन्तकोपने! इत्यर्थः तदा एकस्मिन्नपि वस्तुनि समस्तं स्वसादृश्यदर्शनमपि असहमानात्वं बहुषु विभज्य तन्निवेशितवती इत्यूहे। मय्येव मत्सौन्दर्यं मत्प्राणसखः पश्यतु, नाऽन्यत्र विभक्तमपि तत्सादृश्यं

विलोकयतु इति हे चण्डि! बहुत्र तत् न्याऽऽस्थः। गत्यन्तराभावात् तद्विचिनोमि। मर्षय वराकस्य मेऽपराध-मिति भावो व्यज्यते।

प्रथमोपाये भग्नाशयस्य प्रतिकृतिदर्शनेन वा आत्मानं विनोदयितुं प्रवृत्तस्य मे, तदप्यसहमानेन कृतान्तेन तत्राऽप्यन्तरेव अन्तरायं तन्त्रयित्वा स्वान्ते दुरन्ता चिन्तैव पर्यकल्पि—इति तमाक्रोशति—

"त्वामालिख्य प्रणयकुपितां धातुरागै शिलाया-
मात्मानन्ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्त्रैस्तावन्मुहरुपचितैर्दृष्टिरालिप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः॥"

चण्डी तस्य प्राणप्रिया। अपराधमल्पमपि सा न सहते। अपराधाभासेऽभ्यूहितेऽपि सा प्रणयभरेण कुप्यति। तदा सः प्रणिपातप्रतीकारं तस्याः कोपं मन्यमानः तामुपतिष्ठते, प्रसाद-यति च। तेन बहुशः आचरितं तदिदं तद्दौर्लभ्यवेलायां सर्वदा मनस्यनुसन्धीयमानमस्ति। अत स्तादृशं मधुरं सन्निवेशं मनसि निधाय तमेव चित्रीकर्तुं तेन च विरहविनोदं साधयितुञ्च यक्ष उद्युङ्क्ते।

'कावेऽचि कान्तं मुखम्', 'यद्यत्साधु न चित्रे स्याक्रियते तत्तदन्यथा। तथाऽपि तस्या लावण्यं रेखया किञ्चिदन्वितम्' भवेदिति जानामि। तथाऽपि किं करोमि? तावता तृप्यामि गति मन्यां न पश्यामि' इति एवं व्यवस्यामि। मन्मानसकलहंसीत्वम्। तव प्रतिकृतिः लेखनीया सञ्जातेति हा कष्टम्! गैरिकादिधातुभिः प्रणयकुपितामिव, वस्तुतोऽपराधाभावेन काशंकुशं वाऽवलम्ब्य कोपमास्थिताम्। अतिप्रणयः खलु निर्हेतुककोपसम्भवः। तादात्विकशोभाविशेष सन्दिदृक्षालोभेन विप्रयुक्तस्य मे तृषार्दितस्य सुधाधारेव आनन्दयितृकः भविष्यत्सम्भोगशृङ्गारानुकूल सन्निवेशः। अत स्तत्सन्निवेशरम्यां त्वां मनाशिशलादिभिः गौरिकधातुभिः लेखितुमिच्छामि। धातुरागैः इति पदेन तस्य आलेख्यश्रद्धा, तत्रत्स्थाने चित्रवर्णाकल्पकल्पनगशील्पचातुरीकृतहस्ता च प्रतीयते। तच्च शिलायां न तु चीनांशुकादौ, कथञ्चिदन्विष्य दृष्टे चतुरस्त्रे शिलाफलके त्वदङ्गमार्दवविरुद्धेऽपि उत्कण्ठानिर्बन्धेन कठिनोद्देशे विलिख्य आत्मानं ते चरणपतितं, त्वदेकायत्तजीवितं मां ते चरणयोः लाक्षारसाञ्जजादिभिः उपचारैः परिचितयोः मन्मूर्धवतंसभूतयोः कमलसुकुमारयोः पादयोः पतितं सुधासारविशदमधुरमन्दस्मितज्योत्स्नाप्लावितं मां विधाय आत्मीयाभ्यां शिरीषकुसुमपेशलाभ्यां बाहाभ्यां उत्थाप्य प्रसादलभ्येन संश्लेषणेन सम्भाव्य आनन्दाश्रुभिः प्रणयसाम्राज्यभद्रासनाभिषिक्तं विदध्या इति प्रत्याशया प्रतीक्षे।

अत्र द्वेधा व्याख्या भवति। सा क्षात्स्वरूपेण तस्याश्चित्र गतायाः पादयोः पतितुमिति, तथाविधाया स्तस्याः पादयो र्नयत इव आत्मनः प्रतिकृतिं लेखितुम्, इति च। तथा कर्तुं यावन्मनसा सङ्कल्पेऽहम् तावदुपर्युपरि अनुस्यूत्या समुद्गच्छद्भिः अश्रुभिः दृष्टिः आलुप्यते आव्रियते, अथवा आलिप्यते सुधाद्रवादिनेव परिदिह्यते इति दृष्टेः अत्यन्तान्तरितत्वं भवतीति, सङ्कल्पितमालेख्यं समापयितुं न प्रभवामि। कृतान्तः (दैवं, यमश्च) इत्थमावयोः चित्रगतयोरपि

सङ्गतं न सहते। रचति चैवं साक्षात्समागमन्तु कथं सहेत? स खलु कृतान्तः। (कृतः अन्तः येन सः) न तु साधारणं दैवम्। नृशंसः खलु सोऽन्तकृत। निरपराधस्याऽपि विप्रयोगेन नितान्तान्त-स्वान्तस्य प्रतिकृतौ वा तया साङ्गत्यमुपलभ्य, तदेव राज्यलाभशतादपि ज्यायः इति तदर्थं प्रयतमानस्य मम तावन्तमप्यानन्दं न सोढुं क्षमते। यः स्वकृतमेवान्तयति निर्घृणः तस्य परकृतस्य अन्तःकरणे कः क्लेशः? इति देवं प्रति यक्ष्यस्य मन्युः प्रतीयते यक्षो गृध्नुर्भूत्वाभूतपूर्वमैश्वर्यं वा, न वाञ्छति। अलकायां चैत्ररथे सह कान्तया शरच्चन्द्रचन्द्रिकाविहरणं नाऽभिकाङ्क्षति। मध्ये एव शापावसानमपि नाऽभिलषति। हर्म्येषु वासं, मनोरथ शत-सङ्कल्पित-प्रेयसीसमागमजनितमनूनमानन्दं वा नेच्छति। केवलमालेख्ये दयिताचरणनलि-नान्तिके पतितमात्मनं करोमीति अल्पमेव विनीतमनोरथमाविष्करोति यक्षः। तत्राऽप्यसूयुर्हतविधिः इति वर्णयन् सहृदयान् अनुकम्पाद्रुतचित्तान् अवश्यं करोति। अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्। अयमसाधारणः करुणसन्निवेशः। अयं रस्यतमः श्लोको मेघदूते। तीव्रानपि चित्तद्रुतिकरान् ललिततमान् भावान् अत्रोपचिक्षेप कविकुलगुरुः। अतएव बहुष्वलङ्कारग्रन्थेषु लक्ष्यार्थमुदाहरद्भिः अभिनवगुप्तपादाचार्यप्रभृतिभिः अभियुक्तैरसम्भावित एष श्लोकः।

अत्र कश्चिद्विचारः।'त्वामालिख्य प्रणयकुपिता...आत्मानं ते चरणपतितं यावदिच्छामि कर्तु' मित्यत्र द्वेधा व्याख्या पुरैवाऽदर्शि। तत्र किञ्चिदिवतारतम्य परीक्षा क्रियते। 'गुह्यकः प्रणयकुपितां प्रियां विलिख्य शिलायां प्रतिकृतौ चरणभागमभिलक्ष्य स्वरूपेण, न तु लिखित प्रतिकृत्यात्मना, तत्र पतितमात्मनं कर्तुं शिलोपरि स्वशरीरं पातयितुमियेष—इति व्याख्यानं, मन्ये न विमर्शसहम्। सः प्रियासाः प्रतिकृतिं कथञ्चित् शिलाफलके लिलेख। तत स्स तत्र रेखान्वितं तस्याः सौन्दर्यं उपोषिताभ्यामिव लोचनाभ्यां पपौ कुपितायाः तस्याः पादयोः स्वरूपेण आत्मा पातनीयः। अत्रान्तरे निष्पतद्भिरश्रुभिः दृष्टिर्लोपितेति आत्मा तत्र न पातितः इति किल भावः फलति। परन्तु इदं न तथा दुश्शकम्। दृष्टिलोपेऽपि पुरतश्चित्रे स्थितायाः पादसन्निधौ आत्मा पातयितुं शक्यत एव। इच्छापूर्ति स्सुकरैवतदा 'तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः' इति वचनं नाऽत्यन्तं सङ्गच्छते। जनेन केनचित् अग्रतः प्रतिकृतिं निक्षिप्य तं सन्निवेशं प्रदेशञ्च मनस्याकलया नेत्रे निमील्य तदुपरि आत्मा निर्विघ्नं निपातयितुं शक्यत एव। अतः अन्यैव व्याख्या सरसतरा आश्रयणीयेत्यभिप्रैमि। 'शिलायां लिखिते उभयोः प्रतिकृती शाश्वतिक्यौ भविष्यतः। तदा तच्चित्रं वारं वारमुदीक्षमाणः निवृतिमेष्यामि' इति सङ्कल्प्य आलेख्यचित्रितायाः प्रियायाश्चरणयोः पतितमात्मानं लेखितुं यदा यक्षः प्रवर्तते, तदा अश्रुभिः तस्य दृष्टि र्विलुप्ता। पश्चाद्दृष्टिलोपवशेन निशितदृष्टिनिर्वर्तनीयस्य आत्मचित्रणस्य अवकाश एवं नास्ति · चित्रगतोऽपि समागमः सङ्कल्पितमात्रोऽपि इत्थं विघ्नितः। अयं समन्वयस्सरसः 'इच्छामि क ?' मित्यत्र कर्तुमित्यस्य लेखितुमित्यर्थः क्रिया सामान्यवाचिनः कृधातोः चित्र-लेखनरूपक्रियावि.ोषे पर्यवसानम्। इंदमसाम्प्रदायिकं न। एतादृशः प्रयोगः अनेनैव कविना ग्रन्थान्तरे समादृतः। 'कार्या सैकत लीनहंसमिथुना स्रोतोवहा मालिनी' इत्यत्र मलिनी स्रोतोवहा (नदी) कार्या चित्रे लेखनीया इत्येव तत्राऽर्थो वर्णनीय इतिसर्वं समाहितम्।

अथ च तीव्रतरभावनास्फोरणाय इत्थमपि व्याख्या भवितुमर्हति—"शिलायां धातुरागैः प्रणयकुपितां तामालिख्य आत्मानं ते चरणपतितं लेखितुं यावदिच्छामि, तावदेव पूरोत्पीडं प्रवहता अस्रेण मम दृष्टिरालुप्यते। अर्थात् सर्वमपि सङ्कल्पदशायामेवाऽवर्तत। सम्भारसञ्चयो लेखनारम्भो वा, अंशतश्चित्रणं वा न किञ्चित निर्वृत्तम्। तीव्रभावनामात्रेणैव उद्विग्नतातिरेकवशात् सवेगवाष्पोद्गमोऽजनीति आदावेव लेखनयन्तो व्याहन्यत" इति यक्षो व्यषीदत्। इत्थं वर्णनेन रसपोषो ऽधिकतरो भवतीति प्रत्येमि।

अङ्ग! कविवरेण्य!
पापभ्यायमहं त्वदीयकवितां पीयूषपायं मुहुः
चैतन्याऽप्ययमाप्य किञ्चिदलिखं चापल्यवातेरितः।
भक्तिं वीक्ष्य रसानुभावपहतां श्रद्धाञ्च भावार्दतां
कालिदासममापराधमवशस्येत्यञ्जसा मर्षय॥

---

# राष्ट्रस्य अखण्डतायां संस्कृतस्य योगदानम्

जयमन्तमिश्रः

राष्ट्रम्, राष्ट्रस्य अखण्डता राष्ट्रियभावना, राष्ट्रिय-चिन्तनम्, भावनात्मिका एकता, परस्पर-सौहार्द-सामञ्जस्य-मूलके एकस्मिन् दृढ़सूत्रे देशवासिनाम् गुम्फनम् इत्यादिविषयक-विचाराः तदर्थं व्यावहारिकप्रयोगाश्च विश्वस्य प्राचीनतमायां संस्कृतभाषायां यथा विशदं सुस्पष्टं निरूपिताः सन्ति तथाविधं निरूपणमन्यत्र अद्यापि दुर्लभम्।

(क) राष्ट्रम्—राजते-भ्राजते-शोभते तथा प्रकृतिं रञ्जयतीति राष्ट्रम्। सुसमृद्धं योगक्षेम-निर्वाहकम्, परस्पर-सौमनस्य सहयोग-समन्वितमेव राष्ट्रं जायते जगन्मङ्गलाय, अखण्डत्व-सम्पादनाय, परस्पर-सौहार्दाय चेति सम्यङ् निरूपयति

वैदिकवाङ्मयम्—

"आब्रह्मन् ब्राह्मणो ब्रह्मवचसी जायतामाराष्ट्रे
राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम्...
दोग्ध्रीधेनुः वोढानड्वान् आशुःसप्तिः पुरन्धिर्योषा
जिष्णुरथेष्ठाः सभेयोयुवास्य यजमानस्य वीरो जायताम्
निकामे निकामे नः पर्यन्योवर्षतु फलवत्यो न ओषधयः पच्यन्ताम्
योगक्षेमो नः कल्पताम् ॥"[1]

एवमेव ऋग्वेदीय वागाम्भृणी सूक्तस्य निम्नलिखितमन्त्रः—

"अहं राष्ट्री संगमनी वसूनां
चिकितुषी प्रथमा यज्ञियानाम्।
तां मा देवाव्यदधुः पुरुत्रा
पूरिस्थात्रां भूर्याविशयन्तीम् ॥"[2]

सर्वजनसुखाय राष्ट्रियं चैतन्यम्, राष्ट्रियसमुन्नतभावनाञ्च परिवर्द्धयितुं समुद्बोधयति। एतदर्थञ्च प्रजाभिः परस्परम् मन्त्रणासु, समितिषु, मतिषु, व्यवहारेषु च समरूपत्वम्, एकत्वम्, अविरोधित्वञ्च प्रदर्शनीयानि तथा तदनुसारमेव कार्याणि सर्वथा विधेयानि। "समानो मन्त्रः समितिः समानी समानं मनः" इत्यादि प्रसिद्धवैदिकमन्त्रैः इयमेव राष्ट्रिय-भावना, परस्पर-सौहार्द-सहयोग-विधायिनी, सम्यक् प्रतिपाद्यते।

अमुष्या एव भावनाया विधिरूपेण पल्लवनम् प्रकाशनम्, प्रतिपादनञ्च राष्ट्रिय-विचार-प्रसङ्गे परवर्तिरामायण-महाभारत-स्मृति-पुराणादिषु, विशाले श्रव्य-दृश्यात्मके संस्कृतवाङ्मये च विशदं

1. शुक्लयजुर्वेदे xx. 11. 22 .
2. ऋग्वेदे दशमे मण्डले, दशमाध्याये, 125 तमे सूक्ते तृतीयो मन्त्रः।

वरीवर्तति। अतो राष्ट्रस्य अखण्डतायाः सम्पादने, तद्रक्षणे, तन्महत्त्व-प्रतिपादने च संस्कृतम् अनादि—कालात् अद्यपर्यन्तम् प्रयतमानं सत् अद्वितीयं महत् साधनम्।

(ख) संस्कृतभाषा—संस्कृतशब्देन संस्कृतभाषायाः संस्कृतभाषा-निबद्ध-विषयस्य च बोधो भवति। तत्र भाषा-स्वरूपेण संस्कृतम् राष्ट्रस्य एकतायाम्, अखण्डतायाम् भावनात्मकैकतायाञ्च महद् वैशिष्ट्यमादधाति।

1. संश्लेषणात्मक-वैशिष्ट्येन संस्कृतं सर्वं संयुनक्ति। अन्या प्रादेशिकभाषा वियुनक्ति।
2. एकार्थीभावेन समसन-वैशिष्ट्येन अनेकानि पदानि एकत्र एकपदीकरोति। अन्या कापि भाषा तथाकर्तुम् असमर्था।
3. सन्धि-सामर्थ्येन वर्णान् संदधाति/अन्या भाषा विगृह्णाति।
4. संस्कृतं सम्पूर्णराष्ट्रस्य एकरूपात्मिका भाषा, अतः सम्पूर्णं राष्ट्रमेकस्मिन् सूत्रे आबध्नाति। अन्या भाषा प्रादेशिकी सती संकुचति, परस्परं राग-द्वेषं विदधती वैमनस्यं प्रसारयति।
5. संस्कृतम् एकरूपात्मकतया एकार्थबोधकतया च राष्ट्रस्य एकत्वे अखण्डत्वे च महान्तं सहयोगं विदधाति। अन्या प्रादेशिकी भाषा तथा कर्तुं न क्षमते।
6. संस्कृतभाषा बह्वीनां भाषाणाम् मातृत्वेन पोषणं, पालनं, संवर्धनञ्च करोति बहूनाञ्च धात्रीत्वेन पालन-पोषणं विदधाति।
7. संस्कृतभाषा जननीत्वेन सर्वादुहितृभाषाः समानरूपेण पुष्णाति वर्द्धयति। संवर्द्धिता दुहितरो मातरमेव समुपेक्षन्ते इति खेदाय कल्पते।
8. मातेव परिपोषयन्ती संस्कृतभाषा अमरायते, निर्जरायते कल्पलतायते च।

एवञ्च संस्कृतस्य भाषा-विषयकाणि एवं विधानि वैशिष्ट्यानि राष्ट्रस्य एकत्वमखण्डत्वञ्च सम्पादयन्ति परिपालयन्ति, संवर्द्धयन्तितराम्।

(ग) संस्कृतभाषा-निबद्धा विषयाः—सौमनस्येन एकत्वम् वैमनस्येन च खण्डत्वं भवतीति प्रत्यक्षम्। आदिकालतः संस्कृतम् निरूपयति-पारमार्थिकदृष्ट्या जीवात्मनोरेकरूपत्वात् सर्वेषु भूतेषु एकात्मत्वम् एतेन—

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥[1]
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥[2]
अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥[3]

---

1. *मनुस्मृतिः।*
2. *भगवद्गीता।*
3. *हितोपदेशः*

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद् धनम् ॥[1]
यावद्भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम्।
अधिकं योऽभिमन्यते स स्तेनो दण्डमर्हति ॥[2]
आत्मनः प्रतिकूलानि न परेषां समाचारेत्।

इत्यादिप्रतिपादितम् जीवात्म-विषयकमेकत्वम् तदनुकूलञ्च कर्मानुष्ठानम् सम्पूर्णविश्वम् एकपरिवारात्मकं स्वीकृत्य तथाकर्तुं निर्दिशति।

'माताभूमिः पुत्रोऽहं पृथिव्याः' 'द्यौर्मेपिता' इतिद्यावापृथिव्योरन्तरालस्थाः सर्वे एकस्यैव परिकरस्थ सदस्याः सर्वैश्च सम्भूय मातृभूमिः परिरक्षणीया इतिभावनयैव विश्वं भवति एकनीडम्' इति प्रतिपादयितुं शक्यते।

(घ) राष्ट्रस्य अखण्डतायाः परिरक्षणार्थम् देशवासिनाम् भावनात्मिकाया एकतायाः संवर्द्धनार्थम्, समाजमेकस्मिन् सूत्रे आबद्धं कर्तुं समपेक्षितायाः सनातनधर्मसंस्कृतेः प्रचारं प्रसारञ्च? विधातुम् संस्कृतवाङ्मये—सोमनाथ-रामेश्वर-मल्लिकार्जुनकेदारनाथ—भीमशंकर-विश्वनाथ-वैद्यनाथ-महाकाल त्र्यम्बकेश्वरोङ्कारेश्वर-नागेश्वर-घृष्णेश्वराणाम् द्वादशानाम् भारतस्य विभिन्नभागेषु प्रतिष्ठितानाम् ज्योतिर्लिङ्गानाम्, जगन्नाथ-बदरीनाथ-द्वारकानाथ-रमानाथानाम् पूर्वोत्तर-पश्चिम-दक्षिण-भागेषु संस्थापितानाम् चतुर्णाम् धाम्नाम्, अयोध्या-मथुरा-माया-काशी-काञ्ची अवन्तिका। द्वारावती चेति सप्तानां पुरीणाञ्च स्तवनम्, प्रशंसनम्, वर्णनम्, तत्र प्रेयः श्रेयसोः प्राप्त्यर्थं गमनप्रतिपादनञ्च न केवलम् मानवजीवनसाफल्याय, अपितु राष्ट्रस्य एकत्वेन सह अखण्डत्वपरिरक्षणायापि।

(ङ) सनातन-वैदिकधर्म-संस्कृति-मर्यादा-परिरक्षणार्थम् राष्ट्रस्य एकतायाः सम्पादनार्थम् तथा अखण्डतायाः सुरक्षार्थम् शिवावतार आद्य शङ्कराचार्य-भगवत्पादः 507 ख्रिष्टपूर्वे नन्दने वत्सरे वैशाखशुक्लपञ्चमी रविवासरे केरलप्रान्तीयकालदिग्रामे आर्याम्बा-शिवगुरु-रूपयोः तनः पूतयोर्मातापित्रोः प्रसादाय-अवतीर्य जगन्नाथक्षेत्रे गोवर्द्धनपीठम्, द्वारकानाथक्षेत्रे शारदापीठम्, रामेश्वरक्षेत्रे शृङ्गेरीपीठम्, बदरीनाथक्षेत्रे च ज्योतिष्टपीठम् संस्थाप्य चतुर्षु पीठेषु पद्मपादाचार्य-सुरेश्वराचार्य-हस्तामलकाचार्य तोटकाचार्यान् क्रमशः अभिषिच्य मठाम्नाय सेतु महानुशासननामकं संविधानं निर्माय धर्म-संस्कृति-राष्ट्ररक्षार्थम् विविधान् उपायान् प्रादर्शयत्। भगवत् पादेन संस्कृते वर्णितस्य विषयस्य राष्ट्रस्य अखण्डत्वे महत्त्वपूर्णं योगदानं वरीवर्तीत्यवधेयम्।

(च) रामायण-महाभारत-पुराणादिषु, दृश्य-श्रव्यात्मकेषु विविधेषु काव्येषु च वाल्मीकि-व्यास-भास-कालिदास-भारवि-माघ-जयदेव-कुमारदास-रत्नाकर-प्रभृतिभिः कविकोविदैः विस्तरेण वर्णिताः नग-नदी-वन-भूमि- सागरादयः मानव-जीवन-सुख-समृद्धये न केवलम् प्रदूषण-निवारणाय वातावरणं संशोधयन्ति, अपितु एतद्व्याजेन राष्ट्रस्य अखण्डत्वमपि निर्दिशन्ति।

---

1. ईशावाश्योपनिषद्।
2. श्रीमद्भागवतम् 7/14/8

कालिदासीये अभिज्ञानशकुन्तलनाटकनान्दीश्लोके राष्ट्रस्य विभिन्नस्थानेषु संस्थापितानाम् क्षिति-जल-पावक-समीर-गगनादिस्वरूपाणाम् शर्व-भव-रुद्रोग्र-भीम-पुशपति-महादेवेशान-रूपाणाम् शिवस्य अष्टानाम् प्रत्यक्षमूर्तीनाम् वर्णनम् स्पष्टं राष्ट्रस्य अखण्डत्वं सूचयत् अखण्डत्व-संरक्षणोपायं चापि प्रतिपादयति।

'धर्मसत्तानिर्देशानुसारं राज्यसत्तां संचालयन् सम्राट एकात्मकं राष्ट्रस्वरूपमादधाति' इति स्पष्टं निर्दिशति वाल्मीकि-रामायणम्–

"नहि तद् भविता राष्ट्रं यत्र रामो न वत्स्यति।
तद्वनं भविता राष्ट्रं यत्र रामो निवत्स्यति ॥" (अयोध्याकाण्डे)

राष्ट्रस्य स्वातन्त्र्य-सम्पादने अखण्डत्व-विधाने च संस्कृते यादृशी अलौकिकी विशिष्ट-दिव्य-शक्तिः परीवर्ति तां शक्तिम् भारतवासिनः 'वन्देमातरमिति' राष्ट्रगाने स्वातन्त्र्य-संग्राम-काले अनुभवन्ति स्म।

यदिनाम राज्यसुखमनुभवन्तः अद्यतनीनाराजनेतारः राष्ट्रस्य अखण्डत्वे संस्कृतेन विहितं महद् योगदानम् तत्र निहितं विशिष्टं सामर्थ्यम् च अवगच्छेयुः तर्हि राष्ट्रियविविध-समस्यानां समाधानम् भवेत्–

"सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ॥"

इति राष्ट्रस्य चरमं लक्ष्यं च सिद्धं भवेदिति शम्।

---

# राष्ट्रियसंहितिः संस्कृतं च

## एस. सुन्दरराजः

भारतराष्ट्रस्य संहतौ अर्थात् अखण्डतायां संस्कृतभाषायाः महती भूमिका वर्त्तते। इयं च भूमिका वेदकालादारभ्य अनुबध्नाति। आचन्द्रार्कम् अनुबध्नीयाच्च। भारतस्य ऐक्यं तथा भारतानां सजातीयत्वं प्रति च विष्णुपुराणे पठ्यमानमेकं पद्यं सर्वेषां विदितचरमेव यथा—

"उत्तरं यत् समुद्रस्य दक्षिणं हिमवद्गिरेः।
वर्षं तत् भारतं ज्ञेयं भारतीयाऽत्र सन्ततिः॥" इति।

भारतवर्षस्य प्राचीनतमासु भाषासु प्रधानभूता भाषा संस्कृतभाषेति सर्वे जानन्ति। वेदानां भाषा आर्ष भाषा। व्याकरणशास्त्ररीत्या संस्कारं प्राप्य सा संस्कृतभाषेति प्रसिद्धा जाता। विना संस्कारेण यदि कोऽपि वाचमुदीरयेत् तर्हि तस्याः अर्थः न स्पष्टतया अवगम्येत। यदा कदा वापि सा अर्थान्तरमेव गमिष्यति। इदं पुनः स्पष्टीक्रियते रामायणे भगवता श्रीवाल्मीकिमहर्षिणा, यथा—

"संस्कारेण यथा हीनां वाचमर्थान्तरं गताम्।"

व्याकरणेन भाषायाः संस्कारप्राप्तिं ततः प्राप्यमानां भूतिमपि प्रशंस्य हनूमद्विषये श्रीरामचन्द्रस्य वचोभिरेव रामायणे भगवान् श्रीवाल्मीकिः एवं निगदति, यथा—

"नूनं व्याकरणं कृत्स्नं अनेन बहुधा श्रुतं
बहुव्याहरताऽनेन न किञ्चिदपशब्दितम्।
* * *
उच्चारयति कल्याणीं वाचं हृदयहारिणीं
अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया
कस्य नाराध्यते चित्रमुद्यतासेररेरपि॥"

भर्तृहरिरपि भणति।

"वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते।"

एतादृशी भूतिकारी मङ्गलमयी च संस्कृतभाषा यदि वेदभाषा तथा देवभाषा इत्यपि व्यपदिश्यते तर्हि किमत्र चित्रम्? भूतसृष्टेरनन्तरं परमात्मना प्रजासृष्टिकृते प्रजापतिरुत्पादितो वेदानध्यापितश्चेति पुराणेभ्यः अवगम्यते। 'यस्य निश्वसितं वेदाः' इति वेदाः भगवत एव निश्वसितत्वेन वर्ण्यन्ते। अत एव वेदाः अपौरुषेयाः नित्याः इत्यपि कथ्यन्ते। वेदानां नित्यत्वेन भाषाया अपि नित्यत्वं सिद्ध्यति। परन्तु लोकाः अनित्याः। लोकानामनित्यत्वात् 'धाता यथापूर्वमकल्पयत्' इति वेदोक्तरीत्या धात्रा प्रतिकल्पं अर्थात् प्रतिदिनं उत्पाद्यमानात्

लोकसृष्टिवैचित्र्यात् वेदानां तथा भाषायाश्च नित्यत्वं कथमुपपद्यत इति प्रश्न उत्तिष्ठेदपि। ब्रह्माण्डे प्रजापतीनां बहुलत्वात् एकप्रजापतेः लोकसृष्टिकाले अन्यस्य प्रजापतेर्लोकात् भाषा वेदानां संक्रमणस्य संभवादथवा निद्रायाः जागरितस्य प्रजापतेः स्वकीयस्मरणेन परमात्मना अध्यापितानां भाषावेदानां च यथापूर्वमनुसन्धाने शक्त्या वा इदं साध्यमित्यत्र नेह कस्यापि विषयो भवितुमर्हति। यदा कदा वा प्रजापतिः दैत्यापनीतवेदहेतोः मन्दो भवति तदा परमात्मा स्वयमेव दयया दैत्यान् निगृह्य वेदान् प्रत्यानीय प्रजापतिं तानध्यापयतीति पूर्वाचार्योक्तितः अवधार्यते, यथा श्रीनिगमान्तमहादेशिकस्य श्रीहयग्रीवस्तोत्रतः उद्धृतादस्मात् श्लोकात्—

"मन्दोऽभविष्यन्नियतं विरिञ्चः वाचां निधे वञ्चितभागधेयः।
दैत्यापनीतान् दययैव भूयोऽप्यध्यापयिष्यो निगमान्न चेत्त्वम् ॥"

अस्यां पृष्ठभूम्यामधुना आद्यब्रह्मणः द्वितीयपरार्धे श्वेतवराहकल्पः प्रचलति। एतस्मिन् कल्पे सृष्टायां मर्त्यभूमौ जम्बूद्वीपे भारतवर्षे वयं वसामः। यद्यपि भाषावेदानां ज्ञानं जातेभ्यो मर्त्येभ्यो लोकान्तरेभ्य आगतैः विज्ञानिभिर्देवैः अथवा परमात्मना कृपया लोके अवतरितैरवतारपुरुषैः सम्भाव्यते, तथाऽपि जीवस्य भगवदंशभूतत्वात् स्वधर्मभूतज्ञानविकासेन मर्त्यः स्वयमपि विभिन्नभाषाकलाचारानुत्पादयितुं शक्नोति। दैवेनोत्पादितां भाषा देवभाषा। इतरा मनुष्यजनिताः मानवभाषाः। देवभाषायाः लिपिरपि दैवी भवति। यतः संस्कृतम् एका देवभाषा, तत एव तस्याः लिपिः देवनागरीलिपिरिति व्यपदिश्यते। दण्डिना कथितं ननु "संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः" इति। जीवस्य भगवत एव अंशभूतत्वात् मनुष्यजनितभाषाकलाचारा अपि भगवदनुग्रहणैव जाताः। मनुष्याणामाविष्काराः यथा शकटवाहननौकाबाष्पयन्त्राकाश-विमानसतन्त्रीवितन्त्री-वार्त्तादूरदर्शनगणितियन्त्र- यान्त्रिकमनुष्यान्तरिक्षयात्रादिवैचित्र्याणि सर्वाणि भगवत्कृपयैव तैः असृज्यन्त। किन्तु मनुष्येण नूतनतया न किमपि आविष्क्रियते। भगवतः सृष्टिवैचित्र्ये यत् तथ्यं निहितं वर्त्तते तत् सूक्ष्मतया विज्ञाय प्रयोगे आनेतुं स शक्तो भवति। अस्मिन् व्यतिकरे स्वसौकर्याय मनुष्यभाषाः बहवः उत्पादिताः। ताः परस्परस्पर्धापराः भवन्ति। परन्तु ताः संस्कृतभाषया स्पर्धितुं न शक्नुयुर्न वा इच्छेयुः। अस्माकं भारतदेशे प्राकृतादयो या अपभ्रंशभाषाः जनिताः ताः सर्वाः संस्कृतभाषायाः अधमर्णभूताः। केवलं तमिलिति व्यपदिष्टां द्राविडभाषां हित्वा अन्यास्सर्वाः संस्कृतेन बहुशः प्रभाविताः। तमिल-भाषायामपि संस्कृतभाषायाः संक्रमणं यज्जातं तत् संस्कृतात् स्वीकृतैः बहुभिश्शब्दैः व्यक्तीभवति। संस्कृतजनितत्वात् संस्कृतप्रभावितत्वाच्च प्रान्तीयभाषाः संस्कृतस्य राष्ट्रभाषात्वं प्रणयेन प्रश्रयेण च अङ्गीकृतवत्यस्स्युः। तथा यदि कृतमभविष्यत् तर्हि एषु पञ्चाशदधिकेषु वर्षेषु स्वातन्त्र्यात्परं व्यतीतेषु अस्माकं राष्ट्रस्य ऐक्यं दृढीभूतमभविष्यत्। यद्यपि स्वतन्त्रभारतस्य प्रथमः प्रधानमन्त्री पण्डित-जवाहरलालनेहरुः संस्कृतस्य अनर्घत्वमसमत्सभ्यताकलाचाराणामाकरभूतत्वमजानात् व्यानक् च आहत्य नेतृवर्गेण संस्कृतभाषा राष्ट्रभाषास्थाने मूर्धाभिषिक्ता नाक्रियतेति महानयं विषादस्य विषयः। तथापि राष्ट्रभाषास्थाने स्थापिता हिन्दीभाषा तथा अन्याः संवैधानिकभाषाश्च संस्कृतेन प्रभावितत्वात् क्रमेण राष्ट्रियसंहतिः अद्य वर्धमाना दृश्यते। अस्य मूलकारणं च न गवेष्यं यतः

राष्ट्रस्य वैयक्तिकत्वं आध्यात्मिकत्वे आधारितम्। तच्च सनातनधर्ममूलम्। उभयमप्येतत् संस्कृतभाषाभित्तिकं इति पूर्वमेव कथितम्, यतो धर्मः वेदप्रतिपादितः वेदश्च संस्कृतभाषापरः। आध्यात्मिकत्वं च उपनिषदां सारार्थज्ञानेन सांख्ययोगादिशास्त्राणां अध्ययनेन गीतायास्तात्पर्यावगमेन बृंहितं भवति।

भगवत्साक्षात्कारे प्रयतमानैः ज्ञानिभिर्योगिभिश्च भगवान् यथायोगं सेवितो भवति। तादृशैः प्राप्तभगवत्साक्षात्कारैः महात्मभिः एकं मतं वा एको धर्मो वा प्रतिष्ठाप्यते। भारतराष्ट्रे एवंविधा महात्मानो बहवो अभूवन्। अत एव अस्माकं राष्ट्रं धर्माणामेक आकर इति कथ्यते। केवलं क्रीस्तुमुस्लिमधर्मौ हित्वा अन्ये सर्वेऽपि धर्माः यथा जैनबौद्धशिखादिधर्माः अस्मिन् देशे एव लब्धजन्मानः। धर्माणां वैविध्ये सत्यपि एक एव भगवान् तथा जीवात्मा स्वयं भगवत एव बिम्बः अथवा अंश इति वेदान्ते प्रतिपाद्यते। गीतायां भगवान् श्रीकृष्णः स्वयं कथयति।

"येऽप्यन्यदेवता भक्ताः यजन्ते श्रद्धयाऽन्विताः।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्॥

* * *

लभते हि ततः कामान् मयैव विहितान् हि तान्।
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्॥"

'तत्त्वमसि श्वेतकेतो' 'नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान्' 'एकमेव अद्वितीयं ब्रह्म' 'यस्येदमात्मा शरीरम्' 'द्वा सुपर्णा सयुजा सखायौ समानं वृक्षं परिषस्वजाते। तयोरेकः पिप्पलं स्वादु अत्ति। अनश्नन्नन्यो अभिचाकशीति' इत्यादीन्युपनिषद्वाक्यानि अस्माकं यथातथ्यबोधकानि संस्कृतपराणि यावत्पर्यन्तं तिष्ठन्ति तावत्पर्यन्तं संस्कृतस्य पृथक् स्थानं विनाऽपि राष्ट्रस्य संहतिः दृढा तिष्ठेदेव। परन्तु अस्माकं भारतजनाः स्वयमेव संस्कृतभाषायाः उपयुक्तत्वं ज्ञात्वा तस्या अध्ययनं लोलुपतया चिकीर्षेयुरिति न मे संशयस्य लेशोऽपि वर्त्तते।

प्राचीनकालेऽपि संस्कृतभाषायाः कदाऽपि उन्नतिः कदाऽप्यवनतिर्घटते स्म। पूर्वमेव प्रोक्तं यत् वेदानामार्षभाषा संस्कारप्राप्त्यनन्तरं संस्कृतभाषेति विदिताऽभूत्। पूर्णसंस्कारप्राप्तेः पूर्वं पुराणेतिहासशास्त्राणि बहूनि सरलभाषायाम् आर्षप्रयोगैस्सह निर्मितानि बभूवुः। आदिकाव्ये रामायणे अतीव सरलभाषया निबद्धेऽपि तत्र तत्र बहवः आर्षप्रयोगाः दृश्यन्ते। सारल्यदृष्ट्या रामायणकाले भाषा सा भूयिष्ठैः भाष्यमाणैव बभूवेति ऊहितुं शक्यते। परन्तु बौद्धमतविकाससमये तस्य मतस्य वेदबाह्यत्वात् वेदविरोधहेतोश्च पाळीभाषायाः अभ्युदयस्समभूत्। धम्मपदग्रन्थः जातककथाश्च पाळीभाषायां विरचिता आसन्। परन्तु बौद्धधर्मस्य आध्यात्मिकत्वं स्थापयितुं संस्कृतस्य आवश्यकता उपलब्धा। ततः वैभाषिकसौत्रान्तिकमाध्यमिकयोगाचारविचारग्रन्थाः संस्कृतभाषायां व्यरच्यन्त। वेदान्तिभिस्तथा अन्यमतानुयायिभिश्च सह तर्करीत्या वादप्रतिवादाः प्रचलन्ति स्म। गुप्तकाले यदा वैदिकधर्मस्य पुनरुत्थानमभूत् तदा संस्कृतभाषाया अपि औन्नत्यं समघटत। तत एव गुप्तकालः स्वर्णयुग इत्युद्गीयते। संस्कृतभाषायां बहूनि काव्यनाटकानि

शास्त्रग्रन्थाः ज्योतिर्विद्यागणितविद्यादिग्रन्थाश्च तथा धनुर्वेदायुर्वेदादिग्रन्थाश्च निरमीयन्त। यद्यपि भारतवर्षे बहूनि स्वतन्त्रराजशासितानि राज्यानि अराजन्त तथापि आसेतोः आहिमाचलं च संस्कृतभाषा भद्रभाषा तथा बहूनां राज्यानां राजभाषा चासीत्। बौद्धधर्मावलम्बी राजा श्रीहर्षोऽपि स्वयं संस्कृतपण्डितः कविरासीत्। रत्नावलीनागानन्दमिति द्वे संस्कृतनाटके तेन विरचिते। तस्य जीवनकथाऽपि तस्य सभायां विराजितेन तस्य सुहृदा कविमणिना बाणभट्टेन 'हर्षचरितम्' इति शीर्षकेण ग्रथिता। तस्य पूर्णग्रन्थस्य अलाभेऽपि प्रकाशितांशात् तस्य ग्रन्थस्य अनुत्तमा गुणाः ज्ञायन्त एव। नाटके शिक्षितानां पण्डितानां भाषा संस्कृतभाषा आसीत्। अशिक्षितानां पामराणां स्त्रीणां भाषा तु या काचित् प्रान्तीया अपभ्रंशभाषा अभूत्। तत एव नाटकरचनासु संस्कृतस्य प्रान्तीयभाषाणामपि सम्मिश्रणमुपपन्नमासीत्। पण्डिताः राजानो देवाः ऋषयो ब्राह्मणाश्च संस्कृतेन समलपन्। परं पामराः अशिक्षिताः स्त्रियश्च प्राकृतादिप्रान्तीयापभ्रंशभाषया समभाषन्त।

क्रीस्तोः पूर्वकालेऽपि शूद्रकस्य राज्ञो मृच्छकटिके तथा भासनाटकेषु च एवमेव संस्कृतप्राकृतसमन्वयो दृश्यते। गुप्तानां स्वर्णयुगेऽपि नाटकेषु एतादृशसमन्वयो दृश्यते। परन्तु क्रमशः पण्डितानां स्वस्वपाण्डित्ये अवलेपहेतोः पण्डित्यपरिपूर्णग्रन्थाः अर्धशिक्षितानामवधारणदूरभूताः ग्रथ्यमाना अभूवन्। गद्यग्रन्थाः ये तावत् दीर्घसमासबहुलवह्वलङ्कारकठिनपदप्रयोगपरवाक्यै-र्ग्रथिताः तेऽपि प्रचुरीभूता आसन्। माघमहाकवेश्शिशुपाल- वधमहाकाव्यं हर्षमहाकवेः नैषधीयचरितमहाकाव्यं अनन्तकवेः चम्पूभारतं च जटिलग्रन्थानामुदाहरणभूतानि। पण्डितानामवलेपः संस्कृतभाषायाः ह्रासे हेतुरभूत्। मुस्लिमानां शासनकाले संस्कृतभाषायाः प्रभावो भृशं न हीयते स्म। यद्यपि पार्सीभाषा मुस्लिमानां राजभाषाऽऽसीत् तथाऽपि पण्डितराजजगन्नाथः शाहजहानूचक्रवर्त्तिनः सभायां संस्कृतकविरासीत्। धाराशुकोव् नाम राजकुमारः वह्वीः उपनिषदः पर्सियन् भाषायामनुवादितवान्। हम्मीरनामा मुस्लिमो राजा स्ववीर्याय संस्कृतकविभिः प्रशंस्यमानो बभूव। परन्तु पाश्चात्यानां विशिष्य ब्रिटिषाणामागमनात् परं संस्कृतभाषायै दीयमानं राजकीयसम्मानं भृशं अहीयत। अवश्यं क्षुद्रराजवंश्यैः धनिकैर्भूमिपतिभिश्च तत्र तत्र संस्कृतपण्डिताः आदृताः, सम्मानिताश्च अभवन्। स्वातन्त्र्य-प्राप्तेरनन्तरं संस्कृतभाषा सर्वभारतराष्ट्रभाषा भविष्यति तथा महतीं मान्यतां प्राप्स्यतीति यः स्वप्नो दृश्यमानोऽभूत् स न सत्योऽभूत्। महात्मागान्धी तथा अरविन्दाश्रमगता श्रीमा च संस्कृतं भारतैः सर्वैरध्येतव्यं इत्यैच्छताम्। श्रीमा तां राष्ट्रभाषामप्यैच्छत्। परन्तु हिन्दीभाषा राष्ट्रभाषा बभूवेति इतिहासः। राष्ट्रभाषारूपेण न स्थापितेति संस्कृतभाषायाः महत्वं न हीयते। संस्कृतवाङ्मयं तु महासागर इव। तस्मिन् स्थितानि रत्नानि अनर्घाणि। संस्कृतं विना प्रान्तीयभाषाः पुष्टिं प्राप्तुं न शक्नुयुः। प्रान्तीयभाषाविदोऽपि एतदुररीकुर्वन्ति। तथाऽपि राज्येषु यत्र पूर्वं संस्कृतस्य निर्बन्धमूलकमध्ययनं विद्यालयेषु अभूत् तादृशमध्ययनं परित्यक्तं वा सङ्कुचितं वा जातम्। अस्य कारणं तु त्रिभाषासूत्रमिति सर्वे जानन्ति। पुनरपि तेषु राज्येषु संस्कृतस्य बाध्यतामूलाध्ययनस्य आवश्यकतामुपलभ्य कार्यक्रमो विधीयमानो वर्त्तते। त्रिभाषासूत्रस्य स्थाने चतुर्भाषासूत्रं भवतु। संस्कृतस्य च प्रान्तीयभाषया हिन्दीभाषया आंग्लभाषया च सह अध्ययनं भवत्विति बहवः अभिप्रयन्ति।

ओड्रराज्ये मध्यविद्यालये बाध्यतामूलकसंस्कृताध्ययनं प्रचलति। विद्यालयस्तरे हिन्दीभाषास्थाने संस्कृतं वैकल्पिकभाषारूपेण अध्याप्यते। संस्कृतस्य मातृभाषास्थानमपि दीयेत यतः तत् एम्. आई. एल्. स्थानं प्राप्तुं शक्नुयात्। एवमेव बहुषु अन्यराज्येषु संस्कृतस्य स्थानं उपचीयमानं भविष्यतीति मन्ये। पूर्वकालेऽपि संस्कृतं भारतस्य सर्वप्रान्तेषु सम्पर्कभाषा बभूव इति सर्वेषां विदितमेव। नो चेत् कथं दक्षिणापथे केरले कालडिग्रामे जातः आदिशङ्करः सर्वत्रापि भारते परिभ्रम्य वादेषु मण्डनमिश्रादिपण्डितान् विजित्य स्वकीयमद्वैतमतं प्रचार्य केदारनाथे देहत्यागं कर्तुमशकत्। कथं वा बदरीनिकटस्थ ज्योतिर्मठे पुरुषोत्तमधाम्नि पुरीनगरस्थिते गोवर्धनमठे, शृङ्गगिरौ सह्याद्रौ स्थापिते मठे तथा सौराष्ट्रे द्वारवत्यां स्थापिते मठे आदिशङ्करः आम्नायपीठानि स्थापयितुं अशकत्। शिष्टाः निष्ठावन्तश्च कथं कोणात् कोणात् विभिन्नराज्यस्थित तीर्थानां क्षेत्राणां च पर्यटनं कर्तुमशकन्। कथं गत्वा वदरी, नैमिष, वाराणसी, गया-गङ्गासागर-सङ्गमप्रयोगपुष्करप्रभास नासिकामरनाथ अमरकण्टकनर्मदागोदावरीरामेश्वरगोकर्णसोमनाथ श्रीनाथद्वारवृन्दावनगोकुलायोध्याचित्रकूटादिक्षेत्रतीर्थाण्यसेवन्त। अद्यापि सेवन्ते। सर्वमिदं भारतस्य अखण्डतया अस्मत्पुराणेतिहासशास्त्रैः संसाधितया संपद्यते। तत्र संस्कृतमेकमन्तस्स्रोत इव प्रवहमानमस्माकं संहत्यै मूलकारणं भूत्वा तिष्ठति।

सर्वकारे किञ्चिदकुर्वणेऽपि संस्कृतभाषायाः प्रभावेण भारतसंहतिः संरक्षिता तिष्ठेदेव। परन्तु सर्वकारः किमपि कर्त्तुं बाधितस्स्यात्। यतः सर्वकारोऽयं गणतन्त्रशासनपरो जनानामिच्छानुसारं प्रवर्त्तितुमर्हति। अनेनैव कारणेन मन्ये केन्द्रीयसाहित्य-अकादम्यपि संस्कृतस्य भारतसंहतेः हेतुत्वं विचारयितुं सम्मेलनमिदमायोजितवती। अन्ते मयैव रचितेन संस्कृतस्य भारतसंहतौ हेतुत्वं प्रतिपादयता श्लोकेन मम वाङ्मुखमुपसंजिहीर्षामि।

दिव्या दिगन्त महिता दिविषन्निषेव्या
नव्येतराऽपि नवतां परिपोषयन्ती।
सुव्याकृता सुमधुरा सुरभारतीयं
अव्याजहेतुरिह भारतसंहतौ नः॥

---

# नारायणीयकाव्यस्य तालशिल्पम्

सी. राजेन्द्रन्

कवित्वस्य शास्त्रज्ञत्वस्य च एकत्र मेलनं दुर्लभम्। अनयोः परकाष्ठायाः मेलनं अत्यन्तदुर्लभमेवेति वक्तव्यम्। एतादृशः वरिष्ठकविः वेदवेदाङ्गपारङ्गतः करतलामलकीकृत पुराणेतिहाससारसर्वस्व आसीत् मेल्पुलूट्ट् नारायणभट्टपादः। महामनीषिणोऽस्य *नारायणीयं* नाम स्त्रोत्रकाव्यं आपातरमणीयं आलोचनामृतं च प्रकाशते यत्र कवेरस्य महान् प्रतिभाविशेषः परिस्फुरन् श्लोके श्लोके, सहृदयान् आनन्दसागरे समुन्मज्जयति। नारायणीयकाव्यस्य *भक्तप्रिया* नाम टीका वर्तते। तत्र विद्यमानेयं प्रशस्तिः नैव अतिशयोक्तिरिति सहृदयाः सर्वाकारं अनुमन्येरन्। 'समधिगत-निखिलनिगमार्थसतत्वः शब्दब्रह्मपारावारपारीणः परमभागवतः सकलसहृदयमहितयशाः श्रीनारायणकविः' इति खलु टीकाकारः नारायणकविं तत्र विशिनष्टि।

नारायणभट्टपादस्य *प्रक्रियासर्वस्वं धातुकाव्यं* चास्य व्याकरणवैदुष्यं प्रमापयतश्चेत् मानमेयोदयः मीमांसापारङ्गतत्वममुष्य प्रमापयति। *सूक्तश्लोकाः अश्वलायनक्रियाक्रमश्चास्य* महामतेः वैदिकवाङ्मयवैशारद्यं ख्यापयतश्चेत् तदीयाः *राजसूयप्रभृतयश्चम्पूग्रन्थाः* प्रबन्धापटनामधेयाः कवित्वस्य वाग्विलासस्य च निदर्शनानि भवन्ति। तथ्यमेवोक्तं महाकविना उल्लूट्महाशयेन केरलसाहित्यचरित्रे—

"ऋते च शङ्करभगवत्पादात् पाण्डित्येन कवित्वेन च प्रथमगणनीय इति यः अभिज्ञैः एककण्ठतया सम्मान्यते तादृशोऽमानुष एव मेल्पुलूट्ट् नारायणभट्टपादः। तस्य सर्वतोमुखः महिमातिशयः अवाङ्मनसगोचरः।"

मेल्पुलूट्ट् नारायणभट्टपादस्य कवित्व पाण्डित्यसिद्धयः नारायणीयस्तोत्रे एव पाटम्यं प्राप्नुवन्ति।

भागवतमहापुराणसारसर्वस्वमेव अस्मिन् सहस्रोत्तरश्लोकमये स्तोत्रकाव्ये भट्टपादकविता माध्वीमधुरया गिरा समाविष्कृतं दृश्यते। श्रूयते चासौ महानुभावः वातव्याधिग्रस्तः अनेन नारायणीयकाव्येन गुरुवायुपुरेशे विराजमानं श्रीकृष्णं समभ्यर्च्य मुक्तिमलभत इति। ग्रन्थावसाने निबद्धोऽयं श्लोकः नारायणीयस्य घटनां प्रतिपाद्यं चेत्थं विवृणोति।

अज्ञात्वा ते महत्वं यदिह निगदितं विश्वनाथ क्षमेथाः
स्तोत्रं चैतत् सहस्रेलटमधिकतरं त्वत्प्रसादाय भूयात्।
द्वेधा नारायणीयं श्रुतिषु च जनुषा स्तुत्यतावर्णनेन
स्फीतं लीलावतारैरिदमिह कुरुतामायुरारोग्यसौख्यम्॥

इत्थं चेदं सहस्रोत्तरं स्तोत्ररत्नं भगवतः लीलावतारवर्णनेन पुष्कलतां नीतं आम्नायप्रोक्तां विष्णुस्तुतिमेव वितनोति। नारायणस्येदमिति नारायणेन प्रोक्तमिति च द्वेधा अन्वर्थमिदं

नारायणीयकाव्यं आपातमधुटं 'मधुराधिपतेरखिलं मधुरं' इति यदुक्तं कृष्णलीलाशुकेन तदेव अनुस्मारयति।

नारायणीयकाव्यस्य ईदृशमाधुर्यस्य कारणं शब्दशिल्पस्य अर्थवैचित्र्यस्य च समञ्जसं मेलनमेव। शब्दार्थयोः परस्परस्पर्धित्वरूपमेव साहित्यं अन्वर्थं भवति इति कुलकेन यदुक्तं तत् प्रमापयति इदं काव्यम्। सर्वथा अर्थपौष्कल्यं अनुसरति शब्दवैचित्र्यम्। तालल‌यपूर्णा भवति रचना। पदानि नृत्यत्प्रायाणि। अनुप्रासादादिशब्दालङ्कार महिम्नाय किमपि नूतनं वैचित्र्यं सर्वत्र परिलसति। समुचितवृत्तस्वीकरणेन च कविः रसौचित्यस्य तत्त्वानि सम्यक् पालयति च।

अयं च शब्दगरिमा प्रायशः सवैरपि आलङ्कारिकैः कटाक्षितत्राय एव। तथा चोक्तं अभिनवगुप्ताचार्येण—

यद्यपि विभावानुभावव्यभिचारिप्रतीतिसम्पदेव रसास्वादे निबन्धनं, तथाऽपि विशिष्टश्रुतिशब्दसमर्प्यमाणास्ते विभावादयस्तथा भवन्तीति स्वसंवित्सिद्धमिदम्। तेन वर्णानामपि श्रुतिसमयोपलक्ष्यमाणार्थानपेक्ष्यपि श्रोत्रैकग्राह्यो मृदुपरुषात्मा स्वभावो रसास्वादे सहकार्येव श्रोत्रैकग्राह्योऽपि च स्वभावो रसनिष्यन्दे व्यध्रियत एव, अपदगीतध्वनिवत्, पुष्करवाद्यनियमितविशिष्ट-जातिकरणग्राद्यनुकरणशब्दवच्च।

नारायणीयकाव्ये इयं सिद्धिः तमां पुष्कलतां लीता वर्तते। समुचितवृत्तिपरिग्रहेण, वृत्तस्वीकारेण अनुप्रासादिशब्दालङ्कारवैचित्र्येण च काव्यस्यास्य श्लोकास्सर्वे अस्माकं मनांस्या-वर्णयन्ति। काव्यस्य प्रथमश्लोके एव एते गुणाः नितरां समुन्मिषन्ति।

सान्द्रानन्दावबोधात्मकमनुपमितं कालदेशावधिभ्यां
निर्मुक्तं नित्यमुक्तं निगमशतसहस्रेण निर्भास्यमानम्।
अस्पष्टं दृष्टमात्रे पुनरुरु पुरुषार्थात्मकं ब्रह्मतत्त्वं
तत्त्वावद्भानि साक्षात् गुरुपवनपुरे हन्त भाग्यं जनानाम्॥

अत्र 'सान्द्रानन्द' निर्मुक्तं नित्यमुक्तं निगमनिर्भास्यमानं' इत्यादौ गुम्फितः अनुप्रासः ब्रह्मतत्त्वस्य द्वितीयान्तस्य विशेषणतयोपालानां द्वितीयालानां मालारूपता, गम्भीर्ययुतस्य स्रग्धरावृत्तस्य दीर्घगम्भीरघोषश्च तामपि कमनीयतामावहन्ति।

शार्दूलविक्रीडिते गुम्फितोऽयं भगवद्रूपवर्णनात्मकः श्लोकोऽपि कवेः तालबोधं सम्यक् प्रकाशयति।

सूर्यस्पर्धिकिरीटमूर्ध्वतिलकप्रोद्भासि कालान्तरं
कारुण्याकुलनेत्रमार्द्रहसितोल्लासं सुनासापुटम्।
गण्डोद्यन्मकराभकुण्डलयुगं कण्ठोज्वलत्कौस्तुभं
त्वद्रूपं वनमाल्यहारपटलश्रीवत्सदीप्रं भजे॥

अयमपरो वर्णनाश्लोकः नृत्यतां पदानां मेलनेन वाद्यघोषं जनयतीव।

केयूरांगदकङ्कणोत्तम महारत्नांगुलीयाङ्कित
श्रीमद्बाहुचतुष्कसङ्गतगदाशङ्खारिपङ्केरुहाम्।

काञ्चित् काञ्चनकाञ्चिलाञ्छितलसत् पीताम्बरालम्बिनी
मालम्बे विमलाम्बुजद्युतिपदां मूर्तिं तवार्तित्विदम् ॥

अयं शब्दशिल्पमहिमा नारायणीयकाव्यस्य नरसिंहावतारवर्णने परमोच्चां पदवीं प्राप्य अनुवाचकमनांसि आकम्पयति। अस्मिन् प्रकरणे कविना निबद्धाः इमे श्लोकाः केवलशब्दमहिम्नैव पटहायमाना जायन्ते।

स्तम्भे घट्टयतो हिरण्यकशिपोः कर्णौ समाचूर्णयन्
आपूर्णज्जगदण्डकुण्डकुहरो घोरस्तवाभूद् रवः।
श्रुत्वायं किल दैत्यराजहृदये पूर्वं कदाप्यश्रुतं
कम्पः कश्चन सम्पपात चलितोऽप्यम्भोजभूर्विष्टटात् ॥
दैत्ये दिक्षु विसृष्टचक्षुषि महासंरम्भिणि स्तम्भतः
सम्भूतं न मृगात्मकं न मनुजाकारं वपुस्ते विभो।
किं किं भीषणमेतदद्भुतमिति व्युद्भ्रान्नचित्तेऽसुरे
विस्फूर्जद्धवलोग्ररोमविकसद्वर्ष्मा समाजृम्भताः ॥
तप्तस्वर्णसवर्णघूर्णदतिरूक्षाक्षं सटाकेसर-
प्रोत्कम्पप्रनिकुम्बिताम्बसमहो जीयात्तवेदं वपुः।
व्यालव्याप्तमहोदरीसखमुखं खड्गोग्रवलगन्महा
जिह्वानिर्गमदृश्यमानसुमहादंष्ट्रायुगोड्डामरम् ॥

कवेः इयं प्रौढगम्भीरा वर्णनशैली श्रीकृष्णावतारप्रकरणे नादसौष्ठवान् वेणुगानवद् कर्णानन्दकारिणी सञ्जायते।

अयि सबलमुरारे पाणिजानुप्रचारैः
किमपि भवनभागान् भूषयन्तौ भवन्तौ।
चलितचरणकञ्जौ मञ्जुमञ्जीरशिञ्जा
श्रवणकुतुकभाजौ चेटतुश्चारूवेगात् ॥
मृदु मृदु विहसन्नावुन्मिषद्दन्तवन्तौ
वदनपतितकेशौ दृश्यपादाम्बदेशौ।
भुजगलितकटान्नव्यालगत्कङ्कणाङ्कौ
मतिमहरतमुच्चैः पश्यतां विश्वन्हणाम् ॥

नृत्यन्नीव इयं पदशैली शृण्वनां अनुवाचकानामपि मतिमावर्णयेत्।

नारायणकवेः शब्दरचनायाः नृत्यत्प्रायस्त्वं कालियमर्दनप्रकरणे तमां अतिशयं प्राप्नोति। तोटकवृत्तनिबद्धमिदं प्रकरणं तालवैचित्र्येण अनुवाचकमनस्सु कालियमर्दनरङ्गं साक्षादिव आवहति। दृश्यताम्।

अथ वारिणि घोरतरं फणिनं प्रतिवारयितुं कृतधीर्भगवत्।
द्रुतमारिथ तीरगनीपतरुं विषमारुतशोषितपर्णचयम् ॥

अधिरुह्य पदाम्बुरुहेण च तं नवपल्लवतुल्यमनोज्ञरुचा।
ह्रदवारिणि दूरतरं न्यपतः परिघूर्णितघोरतरं गगने॥
भुवनत्रयभारभृतो भवतो गुरुभारविकम्पिविष्टम्मिजला।
परिमज्जयति स्म धनुश्शतकं तटिनी झटिति स्फुटघोषवती॥
अथ दिक्षु विदिक्षु परिक्षुभित-भ्रमितोदरवारिनिनादभरैः।
उदगादुदगादुरगाधिपति-स्त्वदुपन्नमशान्नरुषान्धमनाः॥
फणशृङ्गसहस्रविनिसृमर-ज्वलदग्निकणोग्रविषाम्बुघटम्।
पुरतः फणिनं समलोकयथाः बहुशृङ्गिणमञ्जनशैलमिव।

अत्र तोटकवृत्तस्य चटुलता 'अथ दिक्षु विदिक्षु परिक्षुभित', 'उदगादुदगादुरगाधिपतिः' इत्यादिशब्दवैचित्र्याणां चमत्कारपूर्णता वा किं अधिकतया अस्माकं मनोमुकुरे वर्णनीयवस्तुनः तन्मयीभावं जनयतीति न विवेक्तुं शक्यम्। इयं तालवैखरी श्रीकृष्णस्य कालियोपरि नृत्तमनुतिष्ठतः चित्रणवेलायां अतोऽपि विभ्रामिका सम्पद्यते। दृश्यताम्।

अधिरुह्य ततः फणिराजफणान् ननृते भवता मृदुपादरुचा।
कलशिञ्जितनूपुरमञ्जुमिलत्-कटकङ्कणसङ्कुलसंक्वणितम्॥
जहृषुः पशुपाः तुषुवुर्मुनयो ववृषुः कुसुमानि सुरेन्द्रगणाः।
त्वयि नृत्यति मारुतगेहपते परिपाहि स मां त्वमदान्नगदात्॥

इयं नृत्तवर्णना अनन्तराश्लोके द्रुतविलम्बिनवृत्ते निबद्धा अपरं वैचित्र्यमावहति।

रुचिरकम्पितकुण्डलमण्डलः सुचिरमीश ननर्तिथ पन्नगे।
अमरताडितदुन्दुभिसुन्दरं वियति गायति दैवतयौवने॥

श्रीकृष्णस्य गोपाङ्गनानां च परस्परमेलनं वर्णयतो नारायणकवेः वाणी अन्यादृशं माधुर्यं अवाप्नोति। वेणुगाननिरतस्य कृष्णस्य बिम्बं हृदि ध्यायन्तीनां गोपीनां अवस्थां विवृणोत्ययं तालमधुरः श्लोकः।

वेणुरन्ध्रतरलाङ्गुलीदलं तालसञ्चलितपादपल्लवम्।
तत् स्थितं तव परोक्षमप्यहो संविचिन्त्य मुमुहुर्व्रजाङ्गनाः॥

गोपीनां श्रीकृष्णस्य च समागमं वर्णयतोऽस्य श्लोकस्य तालशिल्पमपि हृद्यं भवति।

कन्दलितघर्मलेशं कुन्दमृदुस्मेरवक्त्रपाथोगम्।
नन्दसुत त्वां त्रिजगत्-सुन्दरमुपगुह्य नन्दिता बालाः॥

रासक्रीडावर्णनवेलायां नारायणभट्टस्य सरस्वती अत्यपूर्वेण प्रतिभापरिस्पन्देन अनुगृह्यते। लास्यनृत्यं कुर्वन्तीव मधुरमधुरं उड्डायन्तीव च सा परिलसति। कुसुममञ्जरीवृत्तनिबद्धं समस्तं इदं दर्शकं किञ्चन गेयपदमिव अस्माकं मनांस्यावर्णयति। अनेन लयवैचित्र्येण समाक्षिप्तचेतसो वयं यमुनातीरे श्रीकृष्णस्य गोपिकानां च रासक्रीडां साक्षात्कुर्महे। दिङ्मात्रमुदाह्रियते।

कशपाशधृतपिञ्छिकावितति सञ्चलन् मकरकुण्डलं
हारजालवनमालिकाललितमङ्गरागघनसौरभम् ॥
पीतचेलधृतकाञ्चिकाञ्चितमुदञ्चदंशुमणि नूपुरम्
रासकेलिपरि भूषितं तव हि रूपमीशकलयामहे ॥

रासनृत्यवर्णनं पश्यतः

वेणुनादकृततानदानकलगानरागगतियोजना-
लोभनीयमृदुपदपातकृततालमेलनमनोहरम्
पाणिसंक्वणितकङ्कणं च मुहुरंसलम्बितकराम्बुजं
श्रोणिबिम्बचलदम्बरं भजत रासकेलिरसडम्बरम् ॥

रासक्रीडासमाप्तौ अयं आवेगः विलम्बगतिं पश्चान्निश्चलतां च प्राप्नोति।

गानमीश विरतं क्रमेण किल वाद्यमेलनमुपारतं
ब्रह्मसम्मदसमाकुला सदसि केवलं ननृतुरङ्गनाः ॥
नाविदन्नपि च नीविकां किमपि कुन्तलीमणि च कञ्चुलीं
ज्योतिषामपि कदम्बकं दिवि विलम्बितं, किमपरं ब्रुवे?

इत्थं च यथा यथा निरूप्यते तथा तथा सहृदयानां मनस्सु मेल्पुत्तूरनारायणभट्टपादानां वाणीविलासस्य माधुर्यस्य महिमा वारं वारं समाविर्भवेत्। सर्वाः कलाः सङ्गीतपदवीं अधिरोढुं प्रयतन्ते इति खल्वभिज्ञवचनम्। नारायणीयकाव्यस्य तु विषये इदं पुनर्वक्तव्यं सङ्गीतपदवीं अधिरूढमेवेदं काव्यं प्रथममेवेति। तादृशं हि रूपशिल्पं निबद्धमत्र कविना ॥

---

# नाति प्रसिद्धा श्रीनिवासविलासचम्पूः

सि. ललिताराणी

## उपोद्घातः

इह जगति विद्यमाने बहुविधे साहित्ये संस्कृतसाहित्यस्य विलसति अद्वितीयं स्थानमित्यत्र न काचिदपि विप्रतिपत्तिः। प्रपञ्चेऽस्मिन् विभिन्न साहित्यानां आविर्भावात् अतीव पूर्वमेव संस्कृतसाहित्यं प्रादुर्भूतमिति जानन्ति सर्वे विमर्शकाः। "अत एव प्राचीनतमविश्वसाहित्य-भाण्डारे ऋग्वेदस्तावत् प्रथमं पुस्तकमिति" कथयन्ति विज्ञाः। अत एव–

'Ṛgveda is the first book in the library of mankind.' इति आंग्लवाक्यमपि सुप्रसिद्धं वरीवर्ति।

देवतास्तुतिपरे छन्दोबद्धपद्यमये ऋग्वेद एव काव्यसाहित्यस्वरूपाविष्कारः उपलभ्यत इति कथयन्ति काव्यतत्त्वज्ञाः।

## संस्कृतकाव्यवाङ्मयम्

संस्कृतसाहित्ये काव्यानि 1. गद्यमयानि 2. पद्यमयानि 3. गद्य-पद्योभयमयानीति त्रिधा भेदः वरीवर्ति। तेषामेव गद्यकाव्यानि, पद्यकाव्यानि चम्पूकाव्यानीति त्रिविधः व्यवहारः।

1. गद्यकाव्यानि–कादम्बरी, हर्षचरितादि
2. पद्यकाव्यानि–रघुवंश,–कुमारसम्भवादीनि
3. चम्पूकाव्यानि–विश्वगुणादर्शचम्पू–रामायणचम्पू भारतचम्पू प्रभृतीनि।

3. चम्पूकाव्यलक्षणम्

विद्यानाथेन प्रतापरुद्रीये–"गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते" इति चम्पू-काव्य-लक्षणमुक्तम्। यतः काव्येऽस्मिन् गद्यभागः पद्यभागः उचितया पद्धत्या सम्मिश्रणं प्राप्नोति।

महाकविना दण्डिना चम्पूलक्षणमेवमुक्तम्–'गद्यपद्यमयी काचित् चम्पूरित्यभिधीयते' इति। कवितल्लजेन भोजेन चम्पूरामायणे–

'गद्यानुबन्धरसमिश्रितपद्यसूक्तिः
हृद्यापि वाद्यकलया कलितेव भाति।
तस्मात् दधातु कविमार्गजुषां सुखाय
चम्पूप्रबन्धरचनां रसना मदीया॥'

इति चम्पूकाव्यस्वरूपं न्यरूपि। अङ्कविभागः अथवा उच्छवासविभागः एषु चम्पूकाव्येषु दृश्यते।

### सुप्रसिद्धानि चम्पूकाव्यानि

ऐतरेयब्राह्मणे हरिश्चन्द्रोपाख्यानं गद्यपद्यसम्मिश्रिते चम्पूमार्गे एव अभिवर्णितमिति चम्पूकाव्यानामुत्पत्तिः वैदिकवाङ्मये एवास्तीति केषचिदभिप्रायः। त्रिविक्रम भट्टविरचिता नलचम्पूः चम्पूकाव्येषु अद्यावधि उपलब्धेषु प्राचीनेति विमर्शकाः भावयन्ति। एवमेव भोजराजस्य रामायणचम्पूः कविकर्णपूरस्य आनन्दवृन्दावनचम्पूः, अनन्तभट्टस्य चम्पूभारतम्, वेङ्कटाध्वरिकवेः विश्वगुणादर्शचम्पूः, श्रीनिवासकवेः आनन्दरङ्गचम्पूश्च चम्पूकाव्येषु सुप्रसिद्धाः। अन्यानि च चम्पूकाव्यानि सन्ति बहूनि संस्कृतसाहित्ये।

### श्रीनिवासविलासचम्पूः

श्रीनिवासविलासचम्पूः भट्टिवेङ्कटेशेन प्रणीता। भट्टवेङ्कटेश इति कश्चन कविः आन्ध्रप्रदेशस्य वेङ्कटगिरि संस्थानपरिपोषितः बहूनि संस्कृतकाव्यानि प्रणिनाये। तेन प्रणीतेषु काव्येषु श्रीनिवासविलासचम्पूः प्रथमगणनामर्हति।

### भट्टवेङ्कटेशकविः

श्रीनिवासविलासचम्पूकाव्यस्य प्रणेता अप्रतिमप्रतिभः सुगुहीतनामधेयः श्लेषयमक-प्रयोगकुशलः श्रीमान् वेङ्कटेशकविः। यतोऽसौ सकलशास्त्रपारावारपारीणः अतः भट्टिवेङ्कटेश इत्यपि अस्य व्यावहारः जातः। यद्यपि अनेन बहवः ग्रन्थाः विरचिता अथापि अस्य प्रभूता प्रसिद्धिः न समुपजाता। अप्रसिद्धेनापि अनेन प्रणीता श्रीनिवासविलासचम्पूः अद्वितीया चम्पूकाव्येषु मणिरिव तरां शोभते।

### वेङ्कटेशस्य देशः

महाराष्ट्राभिजनः माध्वब्राह्मणः अयम्। माध्वसम्प्रदायानुसारिणः श्रीमतः नरसिंहाचार्यस्य शिष्योऽयम्। कदाचिदयं आन्ध्रप्रदेशस्य नेल्लुरूमण्डलान्तर्गत वेङ्कटगिरिसंस्थानाधीरस्य वेङ्कटपतिरायाभिधस्य पोषणे आसीदिति ज्ञायते।

मध्वसम्प्रदाये सुप्रसिद्धस्य यतिवर्यस्य वादिराजस्वमिनः अनन्तरकालिकः अयं भट्टवेङ्कटेश इति कथयन्ति वृद्धाः। अनेन प्रणीते पञ्चबाणभाणाख्ये काव्ये चिन्तामणिनगरवर्णनेन मतृकासु कासुचित् 'प्रकृतवासः कोलारू' इति लेखनेन च अयं चिन्तामणिनगरे कोलारूपट्टणे च कञ्चित्कालमुवासेत्यभ्यूह्यते। पञ्चबाणभाणान्ते इदं वाक्यमुपलभ्यते—

'सरजापुरश्लेषकविभट्टिवेङ्कटेशकृतभाणः समाप्तः' इति।

अतः कविरयं सर्जापुराभिजन इति, अस्य पुत्रः 'शेषगिरिराय' इति, अस्य पौत्रः 'भावराय' इति च विज्ञायते।

### वेङ्कटेशस्य कालः

महाकविः भट्टवेङ्कटेशः अष्टादशशतकारम्भे भुवं अलंचकारेति श्रूयते।

अस्य कवेः पौत्रः भावुरायः वेङ्कटेशकृत गणपतिस्तुतेः मराठीभाषायां व्याख्यां प्रणीतवान्। भावुरायस्य कालः अष्टादशशताब्दप्रथमदशकमितिस्पष्टमभ्यूह्यते।

अयञ्च कविः क्रीस्तोः परं सप्तदशशतकोत्तरार्धे अष्टादशशतकप्रारम्भे च (1655-1715) अभवदिति निश्चितः अभिप्रायः चरित्रकाराणम्।

## वेङ्कटेशस्य कृतयः

महाकवेः भट्टवेङ्कटेशस्य कृतयः षड्विंवशतिः इति ज्ञायते। तासु नव परिपूर्णतया समुपलभ्यन्ते।

1. श्रीनिवासविलासचम्पूः
2. श्रीनिवासनाममाला
3. लक्ष्मीनक्षत्रमाला
4. गङ्गाप्रशंसा
5. देवर्षिमानवादिस्तुतिः
6. नीतिसप्ततिः—प्रथमा
7. नीतिसप्ततिः—द्वितीया
8. पञ्चबाणभाणः
9. गणपतिस्तुतिः

अन्ये च दशग्रन्थाः एते प्रणीताः अपूर्णतया लभ्यन्ते।

1. अभिनवचम्पूरामायणम्
2. वृत्तरत्नाकरव्याख्या
3. आनन्दतीर्थस्तुतिः
4. भैष्मीपारेणयटीका
5. भागवतसंग्रहटीका
6. अभिनवभारतचम्पूः
7. पारिजाताहरणचम्पूः
8. रामायणसुन्दरकाण्डस्य टीका
9. भागवतटीका
10. अभिनवचम्पूभारतम्

अमुद्रिताः एते ग्रन्थाः राष्ट्रियसंस्कृतविद्यापीठग्रन्थालये समुपलभ्यन्ते।

अन्ये पञ्चग्रन्थाः अनेन प्रणीता इति प्रथा केवलमस्ति। किन्तु अंशतोऽपि त नैवोपलभ्यन्ते।

1. आनन्दतीर्थविजयश्लेषकाव्यम्
2. श्लेषमालिका
3. कण्टकोद्धारः
4. भैमीपरिणयप्रबन्धः
5. सुभाषामणिमञ्जूषा

त्रयः सङ्ग्रहग्रन्था अपूर्णा अनेन कृताश्चोपलभ्यन्ते।

1. प्रसङ्गरत्नावलिः
2. कंसमर्दननाटकश्लोकाः
3. वसन्ततिलकसारश्लोकाः

भट्टवेङ्कटेशेन पञ्चबाणभाणस्य टीका काचन विरचिता। एवं महता परिश्रमेण विविधाः कृतयः अनेन महाकविना प्रणीताः।

### श्रीनिवासविलासचम्पूस्वरूपम्

भट्टवेङ्कटेशेन विरचितायां श्रीनिवासविलासचम्प्वां भागद्वयं चकास्ति। तत्र प्रथमभागे पञ्च उच्छ्वासाः द्वितीयभागे पञ्च उल्लासाश्च भवन्ति। श्लेषयमकप्रयोगनिपुणेनानेन कविना भगवतः श्रीनिवासस्य वेङ्कटाचलाधीशस्य वैभवः काव्येऽस्मिन् अद्वितीयया रीत्या अभिवर्णितः।

### श्रीनिवासविलासचम्पूशैली

काव्यस्यास्य शैली सहृदयमनोहरा विद्योतते। पश्यत—"मालिन्यान्विता आरामा न रामाः। राजद्वेषिणः कोकाः न लोकाः। किञ्च निषादादि जातिभेदसंकुलाः स्वरा इव भूधराः।"

प्रत्यक्षयत पद्यशैलीम्—

दीपे वा तैले वा पतति पतंगो विनश्यति क्षिप्रम्।
अत एव भणामि सखि स्नेहो वह्नेर्नकिञ्चिदप्यूनः॥

### श्रीनिवासविलासचम्पूवैशिष्ट्यम्

"वेङ्कटाद्रिसमं स्थानं ब्रह्माण्डे नास्तिकिञ्चन।
वेङ्कटेशसमो देवो न भूतो न भविष्यति॥"

इति सुप्रसिद्धप्रभावस्य भगवतो वेङ्कटेश्वरस्य जगन्मातुः श्रीपद्मावत्याश्च कल्याण-चरितमवलम्ब्य भट्टवेङ्कटेशः श्रीनिवासविलासचम्पूं इमां प्रणिनाय। प्रतिपदयमकश्लेषानुप्रसादिभूयिष्ठे पद्म—छत्रादि बन्धैः विलसितेऽस्मिन् चम्पूकाव्ये श्रीवेङ्कटेशापरनामधेयस्य श्रीनिवासस्य अवतारवैशिष्ट्यं अद्वितीयया रीत्या अभिवर्णितम्। पश्यत छत्रबन्धविन्यासम्—

नतवत्सलराजीवनेत्र मामव यादव।
नवजीवनदाराव वरदानवजीवन॥

कथासंविधाने पात्रस्वभावचित्रणे तरूगुलमलतादिवर्णने च विशिष्टः मार्गः श्रीनिवासविलासचम्पूकाव्ये कविना प्रदर्शितः।

### उपसंहारः

यद्यपि अनर्घेयं चम्पूः नातीव प्रसिद्धा। तथापि चम्पूकाव्यरङ्गे इयं विलक्षणं समुन्नतं च स्थानमर्हतीत्यत्र नास्ति संशयः।

---

# संस्कृताभिलेखेषु प्राचीनभारतीयार्थव्यवस्था

कमलकिशोरमिश्रः

प्राचीने भारतवर्षे अर्थव्यवस्थायाः विषये विविधानि तथ्यानि ज्ञातानि। ज्ञाततथ्येषु मुख्यतया तथ्यानि अभिलेखेभ्यः प्राप्तानि, एतस्मिन् विषये अभिलेखाः महत्वपूर्णाः भवन्ति। पाषाणादिषु आधारेषु उत्कीर्णानि तथ्यानि अभिलेखरूपेण विराजन्ते। ताम्रपत्राणि शिलालेखाः च अभिलेखेषु परिगणितानि।

प्राचीनभारतीयार्थव्यवस्थायाः विषये प्रचुरसामग्री समुपलभ्यते। अनया दृष्ट्या समुपलब्धाभिलेखानां महत्वपूर्णमवदानमस्ति। अर्थस्य सम्बन्धे कौटिल्यः कथयति 'अर्थएव प्रधानः' इति। आधुनिकार्थशास्त्रिणोऽपि आर्थिकक्रियां जीवनस्य केन्द्रं मन्यन्ते। अर्थशब्दस्याभिप्रायः—"मानवस्य दैनिकोपभोगवस्तुभिः सम्बन्धः।" परं कौटिल्यस्य मतानुसारेण—

सुखस्य मूलं धर्मः, धर्मस्य मूलं अर्थः, अर्थस्य मूलं राज्यम्।

यद्यपि प्राचीनभारतवर्षस्य अर्थव्यवस्थायाः विषयाः ऐतिहासिकैः साधु विवेचिताः किन्तु अद्य यावत् अभिलेखानां दृष्ट्या एतस्मिन् विषये, लघुतरं कार्यं भूतम्। अतः अस्य अध्ययनस्य लक्ष्यम्—"अर्थव्यवस्थापक्षाणां समुद्घाटनम्।"

संस्कृताभिलेखेषु प्रमुखार्थतंत्रीयबिन्दवः—भूप्रबन्धः भूमापकाः, कृषिः, सिंचनप्रणाली, वाणिज्यं व्यापारः राजकीयकरव्यवस्था इति।

भूप्रबन्धः भूप्रबन्धान्तरे भूप्रकारस्य भू-स्वामित्वस्य चाध्ययनं विधीयते। भूमिः त्रिधा विभज्यते—"प्रथमा कृषियोग्या द्वितीया ऊषरा, तृतीया च वासयोग्या।" स्थानीयसंस्कृतस्यानुसारेण अभिलेखेषु निम्ननामानि मिलन्ति यथा—"सीता-क्षेत्रा-पुक्कोली खजान इत्यादीनि।" बंगप्रदेशात् प्राप्ते प्रथमध्रुवसेनस्य मौतमच्छैलताम्रपट्टाभिलेखे[1] कृषियोग्यभूमिः 'सीता' इति कथ्यते।

अकृष्या भूमिः ऊषर भूमिः इति कथ्यते। अस्मिन् वर्गे 'अप्रहत-खिल-अर्द्धखिल इति भूप्रकाराः प्रमुखाः। अस्य पुष्टिः बंगप्रदेशात् प्राप्तेन कलैकुरिताम्रपट्टाभिलेखेन[2] भवति। वासयोग्यभूमिः 'वास्तुभूमि' इति कथ्यते। यत्र कृषकाः समाजस्यान्यवर्गेण सह निवसन्ति। अस्य पुष्टिः उत्कलप्रदेशात् षष्ठशतके बालासोरात् प्राप्तेन ताम्रपट्टाभिलेखेन[3] भवति।

प्राचीनकाले वस्तुतः भूमेः स्वामित्वं कस्य भवति स्म इति अनुसंधानमपेक्षते। मिताक्षरानुसारेण भूदानस्य अधिकारः केवलं राज्ञः एव आसीत्। यतः दाने तद् वस्तु दीयते, यस्योपरि दातुः पूर्णस्वामित्वं भवति स्म। अस्मिन् पक्षे राज्ञः भुवः उपरि पूर्णाधिकारः आसीत्। अस्मिन् सन्दर्भे स्कन्दगुप्तस्य भितरी-अभिलेखेन[4] पुष्टिः भवति।

1. षष्ठशती, एपिग्राफिका इण्डिका, XXI, 3. बंगाल
2. पञ्चमशती, सेलेक्ट इन्सक्रिप्शन्स—I, 353, बंगाल
3. षष्टशती, एपिग्राफिका इण्डिका, XXII, 197, उड़ीसा
4. कार्पस इन्सक्रिप्शनस इण्डिकेरम्. III, संख्या—13.

कौटिल्यमतानुसारेण अनुर्वरं भूमिं ऊर्वरीकरणार्थं दानेन दीयते। तदनन्तरं जनानां भूमेः उपरि पूर्णस्वामित्वं भवति स्म। भू-दानस्य प्रच्छन्नमुदेश्यं भू-सुधारः। महाराष्ट्रप्रदेशस्य श्रष्टयं प्रवरसेनद्वितीयस्य चम्पक इति अभिलेखेन एतत् स्पष्टं भवति।

भू-मापकाः प्राचीनभारतीयाभिलेखेषु दानप्रसंगेन भूक्षेत्रास्य सीम्नः निर्धारणस्य समये भूमापकस्य स्पष्टोल्लेखः प्राप्तः। यतः भूमेः राजस्वनिर्धारणे अस्यावश्यकतासीत्। एषु मापेषु मुख्यतया "आढ़वाप-हल-निवर्तन-कुल्यवाप-द्रोणवाप-पादावर्त्त-पाटकाश्च"[1] इत्यादयः आसन्।

वाणिज्यव्यापारम् अर्थव्यवस्थायाः प्रमुखघटकेषु वाणिज्यव्यापारौ अन्यतमौ स्तः। साधारणतया व्यापारस्य मुख्योद्देश्यः आवश्यकवस्तुनि उपभोक्तृतयाः पार्श्वं नीयते। विप्पणः-उत्पादितवस्तु- सेवा-आधारभूतसंरचना च व्यापारैः सह सम्बद्धाधिकारिगणाः एते सर्वे प्राचीनभारतीयार्थिकजीवनस्य एकं सुनिश्चितं आधारं प्रददति स्म। उपर्युक्तानां तथ्यानां पुष्टिप्रदातारः संस्कृताभिलेखाः[2] बंग-बिहार-महाराष्ट्र प्रभृति प्रदेशात् च लभ्यन्ते। तस्मिन् समये विपणनविज्ञापनस्य महत्वपूर्णं स्थानमासीत्। यस्य पुष्टिः प्रथमकुमारगुप्तस्य मंदसौराभिलेखेन[3] भवति। यस्यानुसारं मंदसौरनगरस्य नार्यः यावत् नालंक्रियन्ते तावत् पट्टवाययुग्लं न धारयन्ति। ई. प्रथमशतके उत्कलप्रदेशात् प्राप्तस्य खारवेलस्य हाथीगुम्फाभिलेखे[4] वर्णितः 'चीनवतानि' इति शब्देन चीनदेशस्य सामुद्रिकव्यापारसम्बन्धस्य स्पष्टः संकेतः लभ्यते। एतदतिरिक्तं अष्टमृशतकस्य एकस्मिन्नभिलेखे[5] भारतीयानां वणिकानां सिंहलदेशेन सह व्यापारस्योल्लेखः समुपलभ्यते। संस्कृताभिलेखैः व्यापारसम्बन्धिताधिकारिवर्गेषु "लेखाकार-और्णवस्थानिक-नौकाध्यक्षादीनां" पुष्टिः भवति।

राजस्वः केनचित् राज्यमाध्यमेन संचालितः शासनव्यवस्थायां राजस्वप्रबंधनस्य केन्द्रीयमहत्वं भवति। अस्मिन् प्रसंगे इदानीम् करध्यवस्थायाः महत्वपूर्णा भूमिकास्ति। अष्टमशताब्दीपर्यन्तं समुपलब्धेषु अभिलेखेषु तत्कालीने समाजे व्यवहृता विविधप्रकाराः कराः दृश्यन्ते। प्राचीनभारतीयसमाजे विविधसाधनैः प्राप्तस्य आयस्योपयोगः लोककल्याणार्थे व्ययीक्रियन्ते स्म। अभिलेखेषु भू-वाणिज्यकरस्योल्लेखोऽस्ति। मुख्यतया भू-राजस्वे "भागः-भोगः-उद्रंगः-उपरिकरः- क्लृप्तः-उपक्लृप्तः-मेयः-धान्यः हलिककरादीनां"[6] प्रचलनम् आसीत्। वाणिज्यकरे "शुल्कः भूतवातप्रत्यायः हिरण्यः घाटकराः इत्यादयः आसन्। भू-राजस्वाधिकारिषु भोगिकः औद्रांगिकः उपरिकः ध्रुवाधिकरणिकः पुनः गौल्मिकादयः आसन् तथापि शौल्किकः हट्टिकः हिरण्यसामुदायिकः तेषां गणना वाणिज्यकरस्याधिकारीरूपेण गणना कृता वर्तते।"

अधिकोषः आधुनिकयुगे इव प्राचीनकालेऽपि अधिकोषस्य व्यापकरूपेण प्रचलनमासीत्।

1. सेलक्ट इन्सक्रिप्शन्स्. I, 342.
2. सेलक्ट इन्सक्रिप्शन्स्. I, 373.
3. कार्पस इन्सक्रिप्सन्स इण्डिकेरम् III, 18, 19, 38
4. सेलेक्ट इन्सक्रिप्सन्स I, 213.
5. जे.ए.बी.ए. 59 I
6. एपिग्राफिका इण्डिका XXXI, 265.

तथापि प्राचीनकालेऽपि अधिकोषस्याभिप्रायः धनस्य रक्षा रक्षितस्य धनस्य च सञ्चितकोषत्त्वेन प्रयोगः आसीत। अस्मिन् सन्दर्भे कुसीद (व्याज) माध्यमेन धनस्य वृद्धिरपि संकेतः लभ्यते यथा–शासकस्य गुणानां विशदीकरणसन्दर्भे स्कन्दगुप्तस्य जूनागढ़-अभिलेखस्य पंक्तिः द्रष्टव्या–

"न्यायार्जनेऽर्थस्य च कः समर्थः
स्यादर्जितस्याप्यथ रक्षणे च।
गोपयितस्यापि च वृद्धिहेतौ
वृद्धस्य पात्राप्रतिपादनाय॥"[1]

दानात्मकाभिलेखेषु अक्षयनीविदानंस्य[2] सप्रसंगोल्लेखः लभ्यते। वस्तुतः अक्षयनीविशब्दस्य साधारणोऽर्थः असमाप्यं मूलधनं भवति। अभिलेखेषु एतादृशी व्याख्यास्ति यत् मूलधने ह्रासं विना तत्तद् कार्यं भवितव्यम्। अनेन अर्थव्यवस्थायां प्रयुक्तानां मूलधनवृद्धिप्रभृतितत्त्वानां ज्ञानं भवति।

मुद्राणाम् अर्थव्यवस्थायाः संचालने विनिमयसाधनानां महत्त्वपूर्णं स्थानं भवति। प्रारम्भिककाले वस्तुविनिमयप्रणाली प्रचलति स्म। परन्तु कालान्तरे मुद्रायाः प्रचलनेन वस्तुविनिमयप्रणाल्यां यत् कृत काठिन्यमासीत् तत् दूरमभवत्। भूमिदानाभिलेखेषु यत्रा भूमिः क्रीत्वा दानरूपेण दीयते स्म तत्रा भूमेः मूल्यस्य उल्लेखो वर्तते।[3] प्राचीनकाले दीनारः[4] रूपकः[5] द्रम्यः[6] कार्षापणम्[7] इत्यादयः मुद्राः प्रचलिता आसन्। प्राचीनेभ्यः अभिलेखेभ्यः दीनाराः इति स्वर्णनिर्मितमुद्राविषये प्रयोगो आसीत् इति ज्ञायते तथा रूपकः द्रम्यः कार्षापणश्च रजतधातुनिर्मिताः मुद्राः।

निष्कर्षतः कथयितुं शक्यते यत् कस्यचिद् अपि युगस्य वास्तविकस्थितेः रूपरेखायाः ज्ञानाय तस्य युगस्यार्थिकपरिस्थितीनां ज्ञानमावश्यकम् भवति। तदर्थमभिलेखाः महदुपकुर्वन्ति।

---

1. सेजेक्ट इन्सक्रिप्शन्स् I, 307
2. कार्पस इन्सक्रिप्शनम् इण्डिकेरम् III, 62ण
3. सेलेक्ट इन्सिक्रिप्सन्स् पृ 18, 19, 34, 36.
4. सेलेक्ट इन्सिक्रिप्सन्स् I, 34.
5. सेलेक्ट इन्सिक्रिप्सन्स् I, 41
6. एपिग्राफिका इण्डिका XI, 299.
7. सेलेक्ट इन्सिक्रिप्सन्स् I, 165.

# ज्ञानेन आचारयुक्तेन प्रसीदति महेश्वरः

चन्द्रमौलि. एस्. नायकरः

बुधजनमानसराजहंसायमानं ज्ञानं, कृत्याकृत्यनिर्देशकं, सत्यासत्यविवेचकं, धर्माधर्म-निर्णायकं, दुःखदुःखविश्लेषकं, हिताऽहितनिर्धारकं इत्यत्र नास्ति संदेह कणिकाऽपि। अत एव हि दुःखनिवारणपुरस्सरं सुखसाधनहेतुभूतं ज्ञानं इति मत्वा मानवाः ज्ञानाधिगमनतत्पराः परिदृश्यन्ते।

ज्ञानेन हीनः पशुभिः समानः इति लोके प्रतीतिः। "ज्ञानलवदुर्विदग्धं ब्रह्माऽपि नरं न रञ्जयति" इति च ज्ञानहीनस्य कृते रञ्जनं नाम सुखं कदाऽपि, केनाऽपि न लभ्यते इति प्रकारान्तरेण सुस्पष्टीकृतम्। एवं च श्रीमद् भगवद्गीतायां स्वयं भगवता श्रीकृष्णेन निगदितं वर्तते "न हि ज्ञानेन सदृशं पवित्रमिह विद्यते" इति। किञ्च परमपुरुषार्थस्य साधनविषये भिन्नाभिप्रायं प्रकटयन्तः अपि दार्शनिकाः ज्ञानस्य श्रेष्ठत्वं, सर्वश्रेष्ठत्वं च आमनन्ति इत्यत्र ऐकमत्यम्। व्यावहारिकविषये च ज्ञानशक्तिरेव गरीयसीति, धूमशकटसंचालकाय वायुयान उड्डयन कर्त्रे मानवाय प्रमाणान्तरेण परिसिद्धेरावश्यकता एव नास्ति।

किं तर्हि ज्ञानम्? इति ऐषिशति ज्ञातुं अस्माकं शेमुषी। ज्ञा-अवबोधने इति धातोः निष्पन्नोऽयं शब्दः। अवबोधनं, अवगमनं इति सामान्यतया अर्थाभिव्यक्तिः भवति। महाभारते स्पष्टतया व्याख्यानं कृतं विद्यते "ज्ञानतत्त्वार्थसम्बोधः इति। एतेन ज्ञातं भवति त्रिकालाबाधितस्य सत्यस्य, तत्त्वं इति परिगणितस्य, अर्थेन नाम पदार्थेन साकं सम्यक्तया अवबोधः एव ज्ञानम् इति। घटत्वपटत्वादीनां नित्यसत्यस्वरूपाणां तत्त्वानां भानं घटत्वावच्छेदकावच्छिन्ने घटे, पटत्वावच्छेदकावच्छिन्ने पटे च क्रमशः भवति चेत् तदा एव तत्त्वार्थसम्बोधः उत्पद्यते इति ज्ञानं भवति। अत एव खलु नैयायिकाः "तद्वतितत्प्रकारकं ज्ञानं प्रमा" इति निरूप्य ज्ञानस्य प्रामाणिकतां निर्धारितवन्तः। एतादृशस्य प्रामाणिकस्य ज्ञानस्य प्रयोजनं किमिति सहजतया सन्देहमधिरोहति अस्माकं मनसि।

प्रामाणिकेन ज्ञानेन विवेकसम्पादनं भवति। विवेकसम्पादनेन धर्मसिद्धिः। धर्मश्च अभ्युदयनिश्श्रेयसाभ्युपगमात्मकः। अतः ज्ञानं ऐहिकामुष्मिकसार्थकता हेतुभूतमित्युच्यते चेत् न काऽपि क्षतिः। व्यवहारे इह जगति यः खलु ज्ञानं विवेकेन क्रियान्वयनं करोति सः फलसिद्धिं प्राप्नोति। प्रवृत्तिरुद्देश्यं फलमिति उद्देशिते कार्ये सम्यक्तया विवेकपूर्वकेण क्रियाकलापेन उद्देशितमेव साधयति। नो चेत् 'विनायकं प्रकुर्वाणः रचयामास वानरं' इतिवत् भवति। अत एव खलु ज्ञानेच्छाकृतयः आनुपूर्वी भजन्ते। प्रथमं ज्ञानं तदनन्तरं च इच्छा, ततश्च क्रियाकलापः इति कार्यस्य विश्लेषणम्। एवं प्रकारेण अधिगतं ज्ञानं क्रियान्वितं स्यात्।

विचाराणां क्रियान्वयनेन एव फलसिद्धिः। अतः ये च विचाराः सन्ति ते आचरणे निरूपिताः भवेयुः। आचरणं च आचारः। आचारः परमोधर्मः इत्यादयः अपि आचरणस्य महत्वं

प्रतिपादयन्ति। अत एव खलु महान् नीतिशास्त्रज्ञः चाणक्यः "कार्ये चाऽपि नियोजयेत्" इति क्रियान्वयनस्य औचित्यं सूचितवान्। प्राप्तं ज्ञानं यदि कार्ये न नियोज्यते चेत् को वा लाभः? व्यर्थमेवेति चिन्तकानां चिन्तनम्। हितोपदेशे कथामाध्यमेन सरलतया "ज्ञानं भारः क्रियां विना" इति प्रतिपादितम्।

एतादृशचिन्तनेन निर्णीतं भवति मानवः ज्ञानं प्राप्य तच्च कार्ये नियोजयेत्। तदा एव अभ्युदयस्य सम्भवः निश्श्रेयसाधिगमश्च। पिण्डीकृतार्थस्तु सिद्धान्तशिखामणि ग्रन्थे उल्लेखितमिव ज्ञानेन आचारयुक्तेन प्रसीदति महेश्वरः इति। यतो हि अस्माकं आचारः परमेश्वरस्य पूजनमेव। उक्तं हि भगवद्गीतायां "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः इति। एवमेव कन्नडभाषायां सुप्रसिद्धोऽस्ति महानुभावानां श्रीबसवेश्वराणां वचनं "कायकवे कैलास" इति। एतेन सुनिश्चितं भवति "ज्ञानेन आचारयुक्तेन प्रसीदति महेश्वरः" इति।

---

ग्रन्थ समीक्षा—

## श्रीरघुनाथदेशिकोदाहरणम्

तट्टा विजयराघवाचार्यः

*श्रीरघुनाथदेशिकोदाहरणम्* (श्रीदेवीशरणागतिसहितम्) प्रबन्धाः—महाकविः श्रीभाष्यं विजयसारथिः प्रकाशनम्-सर्ववैदिकसंस्थानम् एस्. बि. वरप्रसादशर्मा 3-6-662/662 204—सायिसन्ध्या अपार्टमेन्ट्स् 9-हिमायतनगर, हैदराबाद् (आ.प्र.)

महाकविबिरुद्रभाजः श्रीभाष्यं विजयसारथिमहोदयाः सरसकविताविशारदाः भारते सर्वत्र लब्ध प्रतिष्ठाः। ते च 'महामहोपाध्यायः' 'कविशाब्दिककेसरी' 'शास्त्ररत्नाकरः' इत्यादि बहुविधबिरुदविभासुराणां, सुगृहीतनामधेयानां श्रीमतान् नल्लान् चक्रवर्तिरघुनाथाचार्यस्वामिनां कवितापाण्डितीप्रतिभाकीर्तीनामुदाहरणं तद्गुणमणिखचितं पण्डितहृदयाभरणं मधुसुधारस-माधुर्यातिशयं श्रीरघुनाथदेशिकोदाहरणं प्राणैषुः।

उदाहरणप्रक्रिया खलु संस्कृतभाषायां विरला दृश्यतो प्रतिविभक्तिश्रीमद्भिः विजयसारथिमहोदयैः महामहोपाध्यायानां श्रीरघुनाथाचार्यमहाभागानां तलस्पर्शिपाण्डित्यं, निरन्तरशास्त्रार्थनिषेवणनैपुण्यञ्च सम्यक् प्रतिपादितम्। तेषां शैली अत्यन्तं मधुरा मनोहारिणी च यथा—

श्रीभाष्यातिनिगूढतत्त्वविशदव्याख्यानवाचस्पतिः।
प्रख्यातोपनिषद्विवेचननदीष्णः शास्त्ररत्नाकरः ॥इति ॥

श्रीरघुनाथदेशिकोदाहरणपरिशीलनेनेदं स्पष्टीभवति यत्-शास्त्ररत्नाकराः श्रीरघुनाथाचार्य-महोदयाः विशिष्टाद्वैतसिद्धान्तनिर्धारणचणाः, सर्वतन्त्रस्वतन्त्राः अद्वितीयग्रन्थरचनानिपुणा इति। अत्र संयोजिता श्रीदेवी शरणागतिरपि रमणीया रचना। एतदर्थं महाकवयः श्रीभाष्यं विजयसारथिमहोदयाः अभिनन्दनमर्हन्ति।

## शिशोः उत्पत्तिः

सि. ललिताराणी

*शिशोः उत्पत्तिः* रचयिता डॉ. सत्यदेवचौधरी। प्रकाशनम्—अलङ्कारप्रकाशनम्, 3611, नेताजीसुभाष-मार्गः, दरियागंजम्, नई दिल्ली-110002 संस्करणम् : सन् 2000, मूल्यम्—रु. 20.00

आधुनिकविज्ञानप्रसिद्धान् अंशान् अधिकृत्य संस्कृतभाषायां सरलया शैल्या आचार्यैः सत्यदेवचौधरीमहोदयैः बालानां कृते विरचितोऽयं ग्रन्थः—'शिशोः उत्पत्तिः' इति। यद्यपि

पुस्तकमिदं बालानां कृते निर्मितं; तथापि संस्कृतज्ञानां वृद्धानामपि अनेन महान् उपकारः भवतीति ज्ञायते।

लघुकायेऽस्मिन् पुस्तके चतुर्दशप्रकरणानि सन्ति। तेषु प्रकरणेषु शिशूत्पत्तिसम्बन्धिनः अंशाः संक्षेपेण उक्ताः। यथा—डिम्बाशयः, गर्भाशयः, डिम्बनालिका, शुक्राणु-डिम्बयोः मेलनम्, युग्मकः भ्रूणः, शिशुश्च, पैतृकगुणसूत्रम् (क्रोमोसोम) पित्त्यैकः (जीन), पुत्रः पुत्री वा, यमलौ अथवा अधिकाः शिशवः, गर्भवत्याः जनन्याः शिशौ प्रभावः कतिपयभ्रान्तयः इति। तत्र तत्र चित्राण्यपि संयोजितानि।

आधुनिकवैद्यशास्त्रप्रसिद्धानां पारिभाषिकपदानां संस्कृतभाषायां उचितानि पदानि पुस्तकेऽस्मिन् स्वीकृतानि। रचना अत्यन्तं सरला विद्यते। न केवलं बालानां अपि तु प्रोढानां वृद्धानाञ्च विज्ञानदायकं पुस्तकमिदमित्यत्र नास्ति सन्देहः।

एवमत्यन्तम् आवश्यकं शिशुविज्ञानं एतत्पुस्तकद्वारा सुलभं जातमिति प्रणेतारः आचार्य-सत्यदेवचौधरीमहोदयाः अभिनन्दनार्हाः।

# मातृगीतम्

## ई.ए. सिङ्गराचार्य

*मातृगीतम्*—डॉ. आर. श्रीहरिः—द्वितीयमुद्रणम्-42 पुटपरिमितम् मूल्यम्-35 रूप्यकाणि प्राप्तिस्थानम्—आर. अनन्तलक्ष्मी, 16-2-836/F/2, माधवनगर, सैदाबाद्, हैदराबाद, 500059.

'मातृदेवो भव', 'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी', 'न मातुः परदैवतम्' इत्याद्याः बहव्यः वैदिक-लौकिकसूक्तयः मातृदेवतायाः अर्हत्तमत्वं प्रतिपादयन्ति। 'मान्यते इति, माति गर्भोऽस्यामिति च मातेति तद्व्युत्पत्तिद्वयं तस्याः पूज्यतातिशयं प्रथयति। लोके ये केचन दैवास्तित्वमपि न सहन्ते, तैरपि माता पूज्यतमेत्यभ्युपगम्यते। कृपा वात्सल्य-क्षमादिशुभगुणरूपा सा सर्वैरवश्यं भक्तय सेव्या, कीर्तनीया च।

संस्कृत-आन्ध्र-आङ्गलादिनैक भाषाप्रवीणाः, पाणिनीय-साहित्याद्यनेकशास्त्रकुशलाः, सम्प्रति कुप्पम् नगरे (A.P.) विद्यमानस्य द्रविडविश्वविद्यालयस्य उपकुलपति (Vice-chancellor) पदवीमलङ्कुर्वाणाः प्रो. आर. श्रीहरिमहाभागाः *मातृगीतम्* नामकं भक्तिरसघनं शतकात्मकमेकं काव्यं प्रणिन्युः। शब्दमाधुर्येण, अर्थगाम्भीर्येण च पठितृजनहृदयावर्जकेऽस्मिन् काव्ये विभिन्न-वृत्तनिबद्धाः रसगुलिकायमानाः 164 संख्याकाः मुक्तकश्लोकाः संग्रथिताः। पूर्वोत्तरभागरूपेण द्विधा विभक्तमेतत्। प्रथमभागे 31 संख्याकाः, तथोत्तरभागे 133 संख्याकाश्च श्लोकाः विराजन्ते।

प्रथमभागे तावत् प्रायशः सर्वे श्लोकाः कवेः मातृभक्तिपरायणत्वं प्रकटयन्ति। तत्तोदाहरणार्थमेकं श्लोकं पश्यन्तु 'प्रेमाख्यं पीयूषं सन्तत्यै जननि भूरि वर्षन्त्या, कोटित्रयमपि दैवं तुल्यं तद्भवति मातृदेव्या किम्'। द्वितीयभागस्तु कवेः सामाजिकस्पृहां निरूपयति। तत्र

कविः मातरं संबोध्य, इदानीन्तन समाजे सर्वत्र दृश्यमानानि वैषम्याणि कानिचन प्रस्तुत्य विषीदति। 'सर्वं पैरव्यधीनं विफल इह तच्छिल्परहितः', 'नरं बुभुक्षार्दितमेकमम्बपिण्डं प्रदातुं च नरो न हीच्छति इत्यादीन्यनेकान्यत्रोदाहार्याणि। एवमेव केषुचित् श्लोकेषु कविना आत्मनः सुरभारतीविषयिणी श्रद्धाऽपि दर्शिता लक्ष्यते।

सुमधुरशैल्या रमणीयार्थप्रतिपादकमेतत् काव्यं संस्कृतभाषाविद्भिस्सर्वैरवश्यम् पठनीयम्।

---

# THE AṢṬĀDHYĀYI OF PĀṆIṆI

*(With translation and explanatory notes)*

**S.D. Joshi and J.A.F. Roodbergen**

**Volume-1** (1.1.1–1.1.75)
Pages : vi + 144 + Index — First Edn : 1992
ISBN : 81-7201-166-0
**Rs. 160**

**Volume-2** (1.2.1–1.2.73)
Pages : xviii + 131 + Index — First Edn. : 1993
ISBN : 81-7201-500-3
**Rs. 160**

**Volume-3** (1.3.1–1.3.93)
Pages : x + 168 + Index — First Edin. : 1994
ISBN : 81-7201-781-2
**Rs. 150**

**Volume-4** (1.4.1–1.4.110)
Pages : xxiv + 268 + Index — First Edn. : 1995
ISBN : 81-7201-510-0
**Rs. 220**

**Volume-5** (2.1.1–2.1.72)
Pages : xiv + 152 + Index — First Edn. : 1996
ISBN : 81-260-0145-3
**Rs. 180**

**Volume-6** (2.2.1–2.2.38)
Pages : xxiv + 100 + Index — First Edn. : 1997
ISBN : 81-260-0316-2
**Rs. 150**

**Volume-7** (2.3.1–2.3.73)
Pages : xxvi + 134 + Index — First Edn. : 1998
ISBN : 81-260-0589-0
**Rs. 160**

**Volume-8** (2.4.1–2.4.85)
Pages : xxxiv + 166 + Index — First Edn. : 2000
ISBN : 81-260-0751-6
**Rs. 200**

**Volume-9** (6.4.1–6.4.175)
Pages : lxvii + 435 + Index — First Edn. : 2002
ISBN : 81-260-1348-6
**Rs. 400**



**SAHITYA AKADEMI**